॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

१२०



॥ श्रीः ॥

# सांख्यकारिका

सटिप्पण गौडपादभाष्योपेता

हिन्दीभाषानुवादेन च विभूषिता





चौखम्बा संस्कृत सीरीज आफिस, वाराणसी : १

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१२०

श्री ई श्व र कृ ष्ण वि र चि ता

# सांख्यकारिका

## श्रीगौडपादाचार्यकृतभाष्यसहिता ।

न्यायाचार्य-काव्यतीर्थ-

पण्डित श्रीढुण्ढिराजशास्त्रिकृतया

विषमस्थलटिप्पण्या हिन्दीभाषानुवादेन

च समेता ।






चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

# भूमिका

## सांख्यदर्शन की प्राचीनता—

सांख्य दर्शन अत्यन्त प्राचीन दर्शन है। संस्कृत वाङ्मय सांख्यके सिद्धान्तोंसे भरा पड़ा है। बौद्ध पण्डित अश्वघोषने अपने बुद्धचरित नामके काव्यमें भगवान् बुद्धके गुरु अरदाचार्य को सांख्यशास्त्रका वेत्ता कहा है। मनुस्मृतिमें सांख्यके सिद्धान्तोंका अनुसरण करके जगत्की उत्पत्तिका वर्णन किया है। उसीके द्वादशाध्यायमें सांख्याभिमत सत्त्व, रज, तम तीन गुणोंको तथा प्रत्यक्ष, अनुमान और शब्द तीन प्रमाणों को स्वीकार किया गया है। भगवद्गीतामें सांख्य और योगका स्पष्ट शब्दोंमें उल्लेख किया गया है। महाभारतके पञ्चशिख-जनक संवादमें सांख्य-शास्त्रके मुख्य २ सिद्धान्तोंका वर्णन मिलता है। उपनिषदोंमें भी सांख्यके प्रायः सभी सिद्धान्त उपलब्ध होते हैं। श्वेताश्वतर उपनिषद्में सांख्यका सर्वप्रथम नामतः उल्लेख मिलता है। काठक उपनिषद्में सांख्यके तत्त्वोंमें कौन किससे बड़ा है इसका विशद वर्णन मिलता है। छान्दोग्य उपनिषद्में सत्त्व, रज, तम इन तीन गुणोंका वर्णन किया गया है। इनके अतिरिक्त अन्य उपनिषदोंमें भी सांख्यके सिद्धान्तोंका यत्र तत्र उल्लेख मिलता है।

कुछ लोग सांख्यदर्शनको बौद्धदर्शनकी अपेक्षा अर्वाचीन तथा उसके सिद्धान्तोंसे प्रभावित मानते हैं। उनका कथन हैं कि दुःखनिवृत्तिके लिये तत्त्वज्ञानकी प्राप्ति, यागादि वैदिक कर्मोंको व्यर्थ मानना, ईश्वरके विषयमें अनास्था, अहिंसा आदि सिद्धान्त बौद्धागमसे सांख्यमें लिए गए हैं। परन्तु यह मत ठीक नहीं प्रतीत होता। क्योंकि बौद्धोंकी प्राचीन आख्यायिका सांख्यके प्रवर्तक कपिलको बुद्धसे प्राचीन बतलाती है। अश्वघोष भी बुद्धके गुरुको सांख्यका पण्डित कहते हैं। सांख्यमें प्रकृति, पुरुष, सत्त्वादि तीन गुण आदि सिद्धान्त माने गए हैं। बौद्धागममें उनका खण्डन किया गया है। इन बातोंसे तो सांख्यशास्त्र बौद्धागमसे प्राचीन ठहरता है। यदि एकका दूसरे पर असर पड़ा हो तो सांख्यका ही बौद्धागम पर पड़ा होगा।

## 'सांख्य' यह नाम क्यों पड़ा—

सांख्यशास्त्र का 'सांख्य' यह नाम क्यों पड़ा इस विषयमें तीन मत प्रचलित हैं।

प्रथम मतके अनुसार सांख्य शब्द 'गिनती' वाचक 'संख्या' शब्दसे बना है। सांख्यशास्त्रमें तत्त्वोंकी संख्या पचीस बतलाई गई है। इसीलिये इसे सांख्य कहते हैं।

यहां यह प्रश्न उठता है कि वैशेषिक आदि अन्य शास्त्रोंमें भी तत्त्वोंकी संख्या बतलाई गई है, तब उन शास्त्रोंका भी नाम सांख्य क्यों नहीं पड़ा? इसके उत्तरमें यह कहा जाता है कि सांख्य सब शास्त्रोंसे प्राचीन है। संख्याके आधार पर एक बार उसका नाम रख देने पर पीछे उत्पन्न होनेवाले शास्त्रोंका उसी आधार पर वही नाम रखना उचित न होता। भेद बोधन करनेके लिये पीछेके शास्त्रोंके नये नाम रक्खे गए।

दूसरा मत यह है कि सांख्याचार्य द्वारा निर्माण किये जानेके कारण इस शास्त्रका नाम सांख्य पड़ा। यह मत तो अप्रामाणिक प्रतीत होता है, क्योंकि सर्वत्र कपिलका ही इस शास्त्रके निर्माताके रूपमें वर्णन किया गया है।

इस विषयमें तीसरा मत यह है कि प्राचीन कालमें किसी विषय पर प्रमाण-परिष्कृत सरणीसे विचार करनेको संख्या कहते थे। इस विषयमें महाभारतका निम्नलिखित पद्य ध्यान देने योग्य है—

दोषाणाञ्च गुणानाञ्च प्रमाणं प्रविभागतः। कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम् ॥

इस वाक्य से यह प्रतीत होता है कि प्राचीन काल में 'दोषगुणमीमांसा' अर्थात् 'दार्शनिक विचार' इस अर्थमें संख्या शब्दका प्रयोग होता था। इसी संख्या शब्दसे सांख्य शब्द बना है। यही मत ठीक प्रतीत होता है।

## सांख्यके प्रसिद्ध आचार्य—

सांख्यशास्त्रकी रचना कपिल महामुनिने की है। इन्हें 'आदिविद्वान्' भी कहते हैं। इन्होंने उपनिषदोंसे सांख्यके सिद्धान्तों का संग्रह करके उन्हें एक शास्त्रके रूपमें प्रस्तुत किया। कपिलने यह शास्त्र अपने शिष्य आसुरिको सिखाया। आसुरिने इसे अपने शिष्य पञ्चशिखको दिया। पञ्चशिखसे शिष्यपरम्परा द्वारा यह शास्त्र ईश्वरकृष्णको मिला। पञ्चशिख और ईश्वरकृष्णके बीचकी परम्पराका ठीक पता नहीं चलता। माठरवृत्तिमें भार्गव, उलूक, वाल्मीकि, हारीत, देवल आदि ऋषियोंके नाम मिलते हैं। युक्तिदीपिकामें बाष्कलि, कैरात, पौरिक, ऋषभेश्वर, पञ्चाधिकरण, पतञ्जलि, वार्षगण्य कौण्डिन्य और मूकके नाम दिये हैं। इनके अतिरिक्त गर्ग और गौतमके नाम भी मिलते हैं।

## ईश्वरकृष्ण का कालनिर्णय—

परमार्थ नामके किसी चीन देशके पण्डितने सांख्यकारिकाका चीनी भाषामें अनुवाद किया था। यह कार्य ईसवी संवत् की छठवीं शताब्दीमें हुआ था। अतः ईश्वरकृष्णका छठवीं शताब्दीके पूर्व होना निश्चित है।

वार्षगण्य के शिष्य विन्ध्यवासीने 'हिरण्यसप्तति' नामके ग्रन्थकी रचनाकी थी। कुछ विद्वान् इस हिरण्यसप्ततिको ही सांख्यकारिका तथा विन्ध्यवासीको ही ईश्वर-

कृष्ण मानते हैं। वसुबन्धुमें हिरण्यसप्तति का खण्डन अपनी परमार्थसप्ततिमें किया था। वसुबन्धुका आविर्भाव ईसवी संवत्‌के चतुर्थ शतकमें हुआ था। अतः कुछ विद्वानोंके मतानुसार ईश्वरकृष्णका काल चतुर्थ शतकके पूर्व तृतीय शतक है।

अन्य ऐतिहासिक इस मतको नहीं मानते। उनके अनुसार हिरण्यसप्तति तो सांख्यकारिका है परन्तु विन्ध्यवासी ईश्वरकृष्ण नहीं। उनका कथन है कि विन्ध्य वासी का असली नाम रुद्रिल था। विन्ध्यके जंगलोंमें रहनेके कारण उनका नाम विन्ध्यवासी पड़ गया था, वे अपने मतका समर्थन करनेके लिए तत्त्वसंग्रह से—

यदेव दधि तत्त्व क्षारं यत् क्षीरं तद्दधीति च। वदता रुद्रिलेनैव ख्यापिताः विन्ध्यवासिना॥

यह पद्य उपस्थित करते हैं। इसके अतिरिक्त शान्तरक्षित और गुणरत्नने भी अपने-अपने ग्रन्थोंमें ईश्वरकृष्ण और विन्ध्यवासीका अलग-अलग उल्लेख किया है। इन कारणोंसे विन्ध्यवासी और ईश्वरकृष्ण एक ही पुरुष नहीं माने जासकते। यह तो हुई ईश्वरकृष्ण और विन्ध्यवासीके अभिन्नताकी बात। ईश्वरकृष्णके कालके विषयमें इन लोगोंका कथन है कि जैनोंके 'अनुयोगद्वारसूत्र' नामके ग्रन्थ में 'कणगसत्तरी' का उल्लेख मिलता है। यह 'कणगसत्तरी' 'हिरण्यसप्तति' या 'सांख्यकारिका' है। 'अनुयोगद्वारसूत्र' का काल ईसवी संवत्‌का प्रथम शतक है। अतः सांख्यकारिका के कर्ता ईश्वरकृष्णका काल ईसवी प्रथम शतकसे नीचे नहीं लाया जा सकता। सम्भवतः उनका काल ई० पू० प्रथम शतक है।

## सांख्यकारिकामें कारिकाओं की संख्या—

सांख्यकारिकाकी मूल कारिकाओंकी संख्याके विषयमें विद्वानोंका मतभेद है। माठरवृत्तिके साथ प्रकाशित सांख्यकारिकामें ७३ कारिका हैं। उनमें से—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य। इस बहत्तरवीं कारिकाके पर्यालोचनसे प्रतीत होता है कि मूल कारिका ७० हैं, अन्य तीन कारिका प्रक्षिप्त हैं। जो लोग विन्ध्यवासी कृत 'हिरण्यसप्तति' को ही सांख्यकारिका मानते हैं। उनके मतमें भी मूलकारिका ७० ही हैं। वाचस्पति मिश्र तथा नारायण तीर्थ कृत टीकाओंके साथ प्रकाशित सांख्यकारिका में ७२ कारिका हैं। इससे प्रतीत होता है कि इनको मूल कारिकाओं की संख्या ७२ इष्ट है। चीन भाषाके अनुवादसे मालूम होता है कि मूलकारिका ७१ थीं। गौडपादाचार्यने इस ग्रन्थकी व्याख्या केवल ६९ कारिका पर्यन्त की है। अतः उनके मतमें अन्तिम चार कारिका प्रक्षिप्त हैं। बालगङ्गाधर तिलक गौडपादभाष्य और माठरवृत्तिका अध्ययन करके कहते हैं कि सांख्यकारिकामें—

कारणमीश्वरमेके पुरुषं कालं परे स्वभावं वा। प्रजाः कथं निर्गुणतो व्यक्तःकालः स्वभावश्च।

यह कारिका भी थी। किसी कारणसे लुप्त हो गई है। उनके विचारसे यह कारिका ६२ वीं है। गौडपादके द्वारा व्याख्यात ६९ कारिकाओंमें इसे जोड़ देनेसे ७० कारिका हो जाती हैं। ये ही ७१ मूल कारिका हैं, अन्य चार प्रक्षिप्त हैं।

वस्तुतः गौडपादभाष्यके साथ छपी ७२ कारिकाओंमें से प्रथम ७० कारिका मूल प्रतीत होती हैं, अन्य दो प्रक्षिप्त हैं। सत्तरवीं कारिका अत्यन्त सरल होनेके कारण गौडपादने उसपर भाष्य लिखना व्यर्थ समझ कर छोड़ दिया होगा।

## षष्टितन्त्र क्या है ?

गौडपादभाष्य सहित प्रकाशित सांख्यकारिका की 'सप्तत्यां किल येऽर्था' इत्यादि ७२ वीं कारिकासे ज्ञात होता है कि ईश्वरकृष्णने आख्यायिका और परवादको छोड़कर षष्टितन्त्रके सब सिद्धान्तोंको सांख्यकारिकाकी ७० कारिकाओंमें दिखा दिया है। यह षष्टितन्त्र क्या है ? कुछ लोगों का कहना हैं कि प्राचीनकालमें इस नामका कोई ग्रन्थ रहा होगा। माठराचार्यके विचारसे यह शास्त्रका नाम है, ग्रन्थका नहीं। उनका कहना है कि 'षष्टिपदार्था यस्मिन् शास्त्रे तन्त्र्यन्ते तत् षष्टितन्त्रम्'। वाचस्पति मिश्र और नारायण तीर्थ भी इसी मतका समर्थन करते हैं।

## गौडपाद का परिचय

सांख्यकारिका पर सबसे प्राचीन टीका माठरवृत्ति है। पूज्यपाद पं० बलदेव उपाध्यायजी इसका काल ई० अ० प्रथम शतक मानते हैं। बहुत सम्भव है कि सांख्यकारिकाके साथ जिस टीकाका चीनी भाषामें अनुवाद हुआ था वह यही होगी। गौडपादका भाष्य माठरवृत्तिसे अर्वाचीन प्रतीत होता है। वृत्तिके बहुतसे पदार्थ भाष्यमें ज्योंके त्यों लेलिये गए हैं। गौडपादका आविर्भाव ई० अ० आठवें शतकमें हुआ था। ये गौडपाद पूज्यपाद श्री शंकराचार्यजीके गुरु, माण्डूक्यकारिकाके कर्ता, श्रीगौडपादाचार्यसे भिन्न थे। गौडपादभाष्यको देखनेसे इनकी विद्वत्ता माण्डूक्य-कारिकाके कर्ताकी कोटिकी नहीं प्रतीत होती। माठरवृत्ति और गौडपादभाष्यके अतिरिक्त सांख्यकारिका पर युक्तिदीपिका ( कर्ताके नामका पता नहीं ), वाचस्पति मिश्र की सांख्यतत्त्वकौमुदी, शंकराचार्यकी जयमङ्गला और नारायणतीर्थकी चन्द्रिका टीकायें हैं। नरसिंहस्वामीका सांख्यतरुवसन्त अप्रकाशित है।

## सांख्य निरीश्वर है या सेश्वर ?

सांख्यशास्त्रको लोग सामान्यतः निरीश्वर मानते हैं। षड्दर्शनसमुच्चयके कर्ता हरिभद्र ने—

सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः, कहकर सांख्यशास्त्रकी एक धाराका निरीश्वर होना बतलाया है। इससे यह प्रश्न उठता है कि सांख्यशास्त्र निरीश्वर है या सेश्वर।

उपनिषदोंमें सांख्यका जो रूप उपलब्ध होता है वह तो सेश्वर ही प्रतीत होता है। उपनिषदोंमें प्रकृति और पुरुषके ऊपर ब्रह्मकी सत्ता मानी गई है। पुरुषोंको

ब्रह्मका अंशभूत स्वीकार किया गया है। महाभारत, भागवत, भगवद्गीता और मनुस्मृतिमें सेश्वर सांख्यका ही प्रतिपादन किया गया है। यह बात उन ग्रन्थोंके आलोचनसे स्पष्ट होती है। बुद्धने भी अरदाचार्यसे सेश्वर सांख्यका ही अध्ययन किया था। सांख्यकारिकामें प्रतिपादित ईश्वरकृष्णका सांख्य निरीश्वर है इसमें सन्देह नहीं। सांख्यप्रवचनभाष्यके कर्ता विज्ञानभिक्षुका सांख्य सेश्वर है। वे ईश्वरकी सत्ता मानते हैं।

सांख्यको निरीश्वर माननेवाले आचार्यों द्वारा ईश्वरकी सत्ताका निषेध करनेके लिये दिये हुए तर्कोंका सारांश इस प्रकार है—

(१) नित्य परन्तु अपरिणामी ईश्वर जगत्का कारण नहीं हो सकता। यदि वह कारण है तो किस प्रकारका कारण है—उपादान कारण या निमित्त कारण? ईश्वर जगत्का उपादान कारण हो नहीं सकता। क्योंकि वह अपरिणामी है। कार्य तो उपादान कारणका रूपान्तर मात्र होता है।

(२) यदि ईश्वरको निमित्त कारण मानकर जगत्का कर्ता माना जाय तो यह भी असङ्गत होगा, क्योंकि वह तो निरीह है। जगत्को उत्पन्न करनेमें उसका कोई प्रयोजन नहीं दिखाई देता। कोई भी चेतन व्यक्ति किसी कार्यमें निष्प्रयोजन प्रवृत्त नहीं होता। उन्मत्तोंकी प्रवृत्ति निष्प्रयोजन होती है। परन्तु आपका ईश्वर तो उन्मत्त नहीं है।

(३) यदि यह कहा जाय कि ईश्वरका कोई स्वार्थ न होने पर भी पुरुषोंके हितके लिये वह जगत्की रचनामें प्रवृत्त होता है, तो यह भी ठीक न होगा, जगत्की उत्पत्तिके पूर्व शरीर न होनेसे पुरुषोंको किसी प्रकारका दुःख ही नहीं है। अतः पुरुषोंके हितके लिये जगत्की रचनामें प्रवृत्तिकी बात ही नहीं उठती। इसके अतिरिक्त यदि ईश्वर पुरुषोंके हितके लिये जगत्की रचना करता है तो वह केवल सुखमय होना चाहिये, संसार तो दुःखपूर्ण है।

इन सब कारणोंसे यह कहना पड़ता है कि ईश्वर कोई पदार्थ नहीं है। प्रकृति ही जगत्का कारण है। वह जड़ होने पर भी पुरुषके हितके लिये स्वयं प्रवृत्त होती है। जिस प्रकार गायका खाया हुआ घास दूधमें परिणत होकर बछड़ेके पोषणके लिये स्वयं प्रवृत्त होता है।

ईश्वरकी सत्ता माननेवाले सांख्याचार्य प्रकृति और पुरुषके संयोगके लिये ईश्वरकी आवश्यकता मानते हैं। उनका कहना है कि पुरुष निरीह है और प्रकृति जड़ है। उन दोनोंका मिलन स्वयं हो नहीं सकता। अतः ईश्वरको मानना पड़ता है। वह साक्षिमात्र है। उसके सन्निधान मात्रसे प्रकृति पुरुषसे मिलकर जगत्की रचनामें प्रवृत्त होती है। इसका उदाहरण चुम्बक है। उसके समीप आते ही लोहेमें गति उत्पन्न हो जाती है।

## सांख्य और योग का परस्पर सम्बन्ध—

सांख्य और योग परस्पर सर्वथा भिन्न नहीं हैं। योगमें भी सांख्यमें प्रतिपादित तत्त्व माने गए हैं। भगवद्गीतामें श्रीकृष्ण भगवान्‌ने भी कहा है—

सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः।

सांख्यमें प्रतिपादित पञ्चविंशतितत्त्व योगमें भी माने गए हैं। प्रत्यक्षादि तीन प्रमाण दोनों शास्त्रोंको इष्ट हैं। प्रकृति और पुरुषका संयोग संसार है और उनका वियोग मोक्ष है—यह तत्त्व भी दोनों शास्त्रोंमें समान रूपसे स्वीकार किया गया है। सांख्य ज्ञान प्रधान है और योग क्रिया प्रधान। सांख्यमें तत्त्वमीमांसा है, योगमें चित्तवृत्तिके निरोधके उपायोंका वर्णन किया गया है। मोक्षप्राप्तिके साधनके विषयमें दोनोंमें कुछ अन्तर है। सांख्य पञ्चविंशतितत्त्वोंके ज्ञानको मोक्षका कारण मानता है, और योग चित्तवृत्तिके निरोधकी पराकाष्ठाको पुरुषके स्वरूपमें अवस्थानका कारण बतलाता है। योगमें ईश्वर नामका छब्बीसवां तत्त्वभी माना गया है यह भी योगकी विशेषता है। चार्वाकको छोड़कर प्रायः सभी शास्त्रोंमें शरीर और चित्तकी शुद्धिके लिये यौगिक क्रियायें प्रशस्त मानी गई हैं।

काशी<br>सं० २०१० }

कान्तानाथ शास्त्री तेलङ्ग

॥ श्रीः ॥

# साङ्ख्यकारिका

## सटिप्पणगौडपादभाष्यसहिता



दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

---

कपिलाय नमस्तस्मै, येनाविद्योदधौ जगति मग्ने ।
कारुण्यात् साङ्ख्यमयी, नौरिव विहिता प्रतरणाय(१) ॥ १ ॥
अल्पग्रन्थं स्पष्टं प्रमाणसिद्धान्तहेतुभिर्युक्तम्(२) ।
शास्त्रं शिष्यहिताय समासतोऽहं प्रवक्ष्यामि ॥ २ ॥

दुःखत्रयेति । अस्या आर्याया उपोद्घातः क्रियते(३) । इह भगवान् ब्रह्मसुतः कपिलो नाम, तद् यथा—

सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ।
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः ॥

कपिलस्य सहोत्पन्नानि 'धर्मो ज्ञानं वैराग्यमैश्वर्यञ्च' इति । एवं स उत्पन्नः सन् अन्धे तमसि मज्जज्जगदालोक्य संसारपारम्पर्येण सत्कारुण्यो जिज्ञासमानाय आसुरिगोत्राय ब्राह्मणाय इदं पञ्चविंशतितत्त्वानां ज्ञानम् उक्तवान्, यस्य ज्ञानाद्दुःखक्षयो भवति—

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥

---

(१) सत्त्वरजस्तमोभिस्त्रिगुणैः प्रतायमानेऽमुष्मिन्मायाप्रपञ्चे निमज्जतां प्राणिनामुद्धरणार्थं 'संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशतितत्त्वानि तेन सांख्याः प्रकीर्तिताः ॥' इत्याद्युक्तदिशाऽन्वर्थसंज्ञा सांख्यदर्शनात्मिका नौरिव येन महर्षिणा विनिर्मिता तस्मै नम इति भावः । (२) दृष्टादीनि प्रमाणानि, सत्कार्यवादादिरूपाः सांख्यसिद्धान्ता, अव्यक्तादिप्रमेयसाधकहेतवश्च तैर्युक्तमित्यर्थः । (३) प्रासङ्गिकं पीठमारच्यत इत्यर्थः ।

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥**

---

तदिदमाह—**दुःखत्रयाभिघाताज्जिज्ञासेति** । तत्र दुःखत्रयम् आध्यात्मिकम् आधिभौतिकम् आधिदैविकञ्चेति । तत्राध्यात्मिकं द्विविधं—शारीरं मानसं चेति । शारीरं वातपित्तश्लेष्मविपर्ययकृतं ज्वरातीसारादि । मानसं प्रियवियोगाप्रियसंयोगादि । आधिभौतिकं चतुर्विधभूतग्रामनिमित्तं (१) मनुष्यपशुमृगपक्षिसरीसृपदंशमशकयूकामत्कुणमत्स्यमकरग्राहस्थावरेभ्यो जरायुजाण्डजस्वेदजोद्भिज्जेभ्यः सकाशादुपजायते । आधिदैविकं-देवानामिदं दैवम्, दिवः प्रभवतीति वा दैवं, तदधिकृत्य (२) यदुपजायते शीतोष्णवातवर्षाशनिपातादिकम् ।

एवं यथा दुःखत्रयाभिघाता (३) ज्जिज्ञासा कार्या । क्व ? **तदभिघातके हेतौ** । तस्य दुःखत्रयस्य अभिघातको योऽसौ हेतुस्तत्रेति । 'दृष्टे सापार्था चेत्, दृष्टे हेतौ दुःखत्रयाभिघातके सा जिज्ञासाऽपार्था चेद् यदि, तत्राध्यात्मिकस्य द्विविधस्यापि आयुर्वेदशास्त्रक्रियया प्रियसमागमाप्रियपरिहारकटुतिक्तकषायक्काथादिभिर्दृष्ट एव आध्यात्मिकोपायः, आधिभौतिकस्य (४) रसादिनाऽभिघातो दृष्टः, **दृष्टे साऽपार्था चे**देवं मन्यसे; न, **एकान्तात्यन्ततोऽभावात्** । यत एकान्ततोऽवश्यमत्यन्ततो नित्यं दृष्टेन हेतुनाऽभिघातो न भवति, तस्मादन्यत्र (५) एकान्तात्यन्ताभिघातके हेतौ जिज्ञासा विविदिषा कार्येति ॥ १ ॥

(६) 'यदि दृष्टादन्यत्र जिज्ञासा कार्या, ततोऽपि नैव, यत आनुश्रविको हेतुः दुःखत्रयाभिघातकः, अनुश्रूयत इत्यनुश्रवस्तत्र भवः, आनुश्रविकः, स च आग-

---

( १ ) अनुपदवक्ष्यमाणजरायुजादि चतुर्विधभूतसमुदायोत्थम् । ( २ ) तन्निमित्तीकृत्येत्यर्थः । (३) इत्युक्तदुःखत्रयाभिसम्बन्धादित्यर्थः । (४) निरत्ययस्थानवासनीतिशास्त्रानुसरणादिरूपरक्षादिनेत्यर्थः । इदमुपलक्षणम्—आधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधादिनाऽभिघातो द्रष्टव्यः । पूर्वपक्षमुपसंहरति—दृष्ट इति । (५) पूर्वोक्तदृष्टोपायाद्भिन्ने सांख्यशास्त्रजन्यतत्त्वज्ञानरूप इत्यर्थः । ( ६ ) शङ्कते—यदीति । नैवेति । दृष्टोपायातिरिक्ते सांख्यशास्त्रजन्यतत्त्वज्ञानविषये जिज्ञासा नैव कार्या इति शेषः । तत्र हेतुमाह—यत इति ।

मात् सिद्धः, यथा—

अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं वा नूनमस्मान् तृणवदरातिः किमु धूर्तिरमृतमर्त्त्यस्य ॥

( १ ) कदाचिदिन्द्रादीनां देवानां कल्प आसीत्—कथं वयममृता अभूमेति विचार्य, यस्माद्वयमपाम सोमं पीतवन्तः सोमं तस्मादमृता अभूम अमरा भूतवन्त इत्यर्थः । किञ्च, अगन्म ज्योतिः—गतवन्तः लब्धवन्तः ज्योतिः स्वर्गमिति । अविदाम देवान्—दिव्यान् विदितवन्तः । एवं च किं नूनमस्मान् तृणवदरातिः, नूनं निश्चितं किमरातिः शत्रुरस्मान् तृणवत् कर्तेति । किमु धूर्तिरमृतमर्त्यस्य धूर्तिर्जरा हिंसा वा किं करिष्यति अमृतमर्त्त्यस्य ( २ )। अन्यच्च वेदे श्रूयते आत्यन्तिकं फलं पशुवधेन—'सर्वांल्लोकान् जयति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां तरति योऽश्वमेधेन यजते' इति । ऐकान्तात्यन्तिके एवं वेदोक्ते ( ३ ) 'अपार्थैव जिज्ञासा' इति, न । उच्यते—**दृष्टवदानुश्रविक** इति । दृष्टेन तुल्यो दृष्टवत्, योऽसौ आनुश्रविकः, कस्मात् स दृष्टवत्? यस्माद**विशुद्धिक्षयातिशययुक्तः** । अविशुद्धियुक्तः पशुघातात्, तथा चोक्तम्—

षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः ॥ इति ।

इत्थं यद्यपि श्रुतिस्मृतिविहितो धर्मस्तथापि ( ४ ) मिश्रीभावादविशुद्धियुक्त इति । तथा—

बहूनीन्द्रसहस्राणि देवानां च युगे युगे ।
कालेन समतीतानि कालो हि दुरतिक्रमः ॥ इति ।

एवमिन्द्रादिनाशात् क्षययुक्तः । तथाऽतिशयो विशेषस्तेन युक्तः । विशेषगुणदर्शनादितरस्य ( ५ ) दुःखं स्यादिति । एवमानुश्रविकोऽपि हेतुर्दृष्टवत् । 'कस्तर्हि श्रेयानि'ति चेत्? उच्यते—**तद्विपरीतः श्रेयान्**, ताभ्यां दृष्टानुश्रविकाभ्यां विप-

---

( १ ) सेतिहासम्मन्त्रार्थमाह—कदाचिदिति । कल्पः—न्यायः । (२)दिव्यशरीरस्य मे इत्यर्थः । आनुश्रविककर्मकलापस्यात्यन्तिकदुःखनिवृत्तौ प्रमाणान्तरमाहान्यच्चेति । पशुवधेन—तन्निमित्तेन यागादिकर्मणेत्यर्थः ।( ३ ) आत्यन्तिकैकान्तिकदुःखपरिहारके वैदिके कर्मणि सुकरे उपाये विद्यमाने सति दुष्करे शास्त्रोक्ततत्त्वज्ञानरूपे जिज्ञासा व्यर्थैवेत्यर्थः । ( ४ ) पशुवधजन्यपापफलदुःखयुक्तत्वात् स्वर्गादिरूपयागफलजनको धर्मो न इत्यर्थः । वैधहिंसाभिन्नहिंसैव पापजनिकेत्यत्र भिन्नान्तत्वनिवेशे प्रमाणाभावात् । ( ५ ) हीनगुणसम्पदः ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

---

रीतः श्रेयान् प्रशस्यतर इति, अविशुद्धिक्षयातिशयायुक्तत्वात् । स कथमित्याह— **व्यक्ताव्यक्तज्ञविज्ञानात्** । तत्र व्यक्तं महदादि–बुद्धिरहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतानि, अव्यक्तं प्रधानम्, ज्ञः पुरुषः, एवमेतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञाः कथ्यन्ते, एतद्विज्ञानाच्छ्रेय इति । उक्तं च 'पञ्चविंशतितत्त्वज्ञ' इत्यादि ॥ २ ॥

'अथ व्यक्ताव्यक्तज्ञानां को विशेष इति'(१) उच्यते—**मूलप्रकृतिः** प्रधानम्, प्रकृतिविकृतिसप्तकस्य मूलभूतत्वात्, मूलं च सा प्रकृतिश्च मूलप्रकृतिः, **अविकृतिः** अन्यस्मान्नोत्पद्यते, तेन प्रकृतिः ( २ ) कस्यचिद्विकारो न भवति । **महदाद्याः प्रकृतिविकृतयः सप्त** । महान् बुद्धिः, बुद्ध्याद्याः सप्त—बुद्धिः १ अहङ्कारः १ पञ्च तन्मात्राणि ५ एताः सप्त प्रकृतिविकृतयः । तद् यथा–प्रधानाद् बुद्धिरुत्पद्यते तेन विकृतिः प्रधानस्य विकार इति, सैवाहङ्कारमुत्पादयति अतः प्रकृतिः । अहङ्कारोऽपि बुद्धेरुत्पद्यत इति विकृतिः, स च पञ्च तन्मात्राण्युत्पादयतीति प्रकृतिः । तत्र शब्दतन्मात्रमहङ्कारादुत्पद्यत इति विकृतिस्तस्मादाकाशमुत्पद्यत इति प्रकृतिः । तथा स्पर्शतन्मात्रमहङ्कारादुत्पद्यत इति विकृतिस्तदेव (३) वायुमुत्पादयतीति प्रकृतिः । गन्धतन्मात्रमहङ्कारादुत्पद्यत इति विकृतिस्तदेव पृथिवीमुत्पादयतीति प्रकृतिः । रूपतन्मात्रमहङ्कारादुत्पद्यत इति विकृतिस्तदेव तेज उत्पादयतीति प्रकृतिः । रसतन्मात्रमहङ्कारादुत्पद्यत इति विकृतिस्तदेवमप उत्पादयतीति प्रकृतिः । एवं महदाद्याः सप्त प्रकृतयो विकृतयश्च । **षोडशकस्तु विकारः**; पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि एकादशं मनः पञ्च महाभूतानि एष षोडशको गणो विकृतिरेव विकारो विकृतिः । **न प्रकृतिर्न विकृतिः पुरुषः** ( ४ ) ॥ ३ ॥

---

( १ ) पूर्वोक्तपञ्चविंशतितत्त्वानां संक्षिप्तचतुर्विधसांख्याभिमतपदार्थेषु अन्तर्भावरूपविशेष उच्यत इत्यर्थः । ( २ ) प्रकर्षेण कार्यकारणात्प्रकरणात्प्रकृतिरिति वाचस्पतिमाठरौ । ( ३ ) पूर्वोक्तशब्दतन्मात्ररीत्या, एवमग्रेपि । ( ४ ) एवं च प्रकृतिविकृतिरूपे जगति कश्चित्प्रकृतिरूप एव, कश्चिद्विकृतिरूप एव, कश्चिदुभयरूपः, कश्चिदनुभयरूप एव पदार्थ इति भावः ।

(१) एवमेषां व्यक्ताव्यक्तज्ञानां त्रयाणां पदार्थानां कैः कियद्भिः प्रमाणैः केन कस्य वा प्रमाणेन सिद्धिर्भवति, इह लोके प्रमेयवस्तु प्रमाणेन साध्यते, यथा प्रस्थादिभिर्व्रीहयस्तुलया चन्दनादि, तस्मात् प्रमाणमभिधेयम् (२)। **दृष्टमिति।** दृष्टं यथा श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि, शब्दस्पर्शरूपरसगन्धा एषां पञ्चानां पञ्चैव विषया यथासंख्यम्, शब्दं श्रोत्रं गृह्णाति, त्वक् स्पर्शं, चक्षू रूपं, जिह्वा रसं, घ्राणं गन्धमिति, एतद् दृष्टमित्युच्यते प्रमाणम्। (३) प्रत्यक्षेणानुमानेन वा योऽर्थो न गृह्यते स आप्तवचनाद् ग्राह्यः (४)। यथा 'इन्द्रो देवराजः, उत्तराः कुरवः, स्वर्गेऽप्सरसः' इत्यादि। प्रत्यक्षानुमानाग्राह्यमप्याप्तवचनाद् गृह्यते। अपि चोक्तम् (५)—

आगमो ह्याप्तवचनमाप्तं (६) दोषक्षयाद्विदुः। क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्॥

स्वकर्मण्यभियुक्तो यः सङ्गद्वेषविवर्जितः।
पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः॥ इति।

(७) एतेषु प्रमाणेषु सर्वप्रमाणानि सिद्धानि भवन्ति। षट् प्रमाणानि जैमिनिः। अथ कानि तानि प्रमाणानि? 'अर्थापत्तिः सम्भवः अभावः प्रतिभा ऐतिह्यम् उपमानं च' इति षट् प्रमाणानि। तत्रार्थापत्तिर्द्विविधा—दृष्टा श्रुता च। तत्र दृष्टा—एकस्मिन् पक्षे आत्मभावो गृहीतश्चेदन्यस्मिन्नप्यात्मभावो गृह्यत एव। श्रुता यथा—दिवा देवदत्तो न भुङ्क्ते, अथ च पीनो दृश्यते, अतोऽवगम्यते रात्रौ भुङ्क्त इति। सम्भवो यथा—प्रस्थ इत्युक्ते चत्वारः कुडवाः सम्भाव्यन्ते। अभावो नाम प्रागितरेतरात्यन्तसर्वाभावलक्षणः। प्रागभावो यथा—देवदत्तः कौमारयौवनादिषु (८)। इतरेतराभावः—पटे घटाभावः। अत्यन्ताभावः—खरविषा-

---

(१) प्रमेयोद्देशानन्तरम्। प्रमाणनिरूपणे सङ्गतिमाह—एवमिति। (२) तद्दर्शयति-विभागलक्षणाभ्यां दृष्टमितीति शेषः। (३) प्रत्यक्षपूर्वकमनुमानं प्रसिद्धत्वाद्वक्ष्यमाणत्वाच्चात्रोद्देशप्रकरणे नोक्तम्। (४) आप्ता रागद्वेषरहिता सनत्कुमारादयः, श्रुतिर्वेदस्ताभ्यामुपदिष्टं तथेति श्रद्धेयमाप्तवचनमिति माठरः। (५) अत एवोक्तमित्यर्थः। (६) आप्तवचनं लक्षयित्वा तद्घटितमाप्तत्वं निर्वक्ति—आप्तमिति। (७) सर्वप्रमाणसिद्धत्वादिति कारिकांशं व्याचष्टे—एतेष्विति। सिद्धानि—अन्तर्भूतानि। (८) कुमारदेवदत्ते युवा भविष्यतीति यौवनप्रागभाव इत्यर्थः।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

णबन्ध्यासुतखपुष्पवदिति । सर्वाभावः–प्रध्वंसाभावो दग्धपटवदिति । यथा शुष्क-धान्यदर्शनाद् वृष्टेरभावोऽवगम्यते । (१) एवमभावोऽनेकधा । प्रतिभा यथा–'दक्षिणेन च विन्ध्यस्य सह्यस्य च यदुत्तरम् । पृथिव्यामासमुद्रायां स प्रदेशो मनोरमः ॥' एवमुक्ते तस्मिन् प्रदेशे शोभनाः गुणाः सन्तीति प्रतिभोत्पद्यते, प्रतिभा च जानतां ज्ञानमिति (२) । ऐतिह्यं यथा–ब्रवीति लोको यथाऽत्र वटे यक्षिणी प्रति-वसतीत्येव ऐतिह्यम् । उपमानं यथा—गौरिव गवयः, समुद्र इव तडागः । एतानि षट् प्रमाणानि त्रिषु दृष्टादिष्वन्तर्भूतानि । तत्रानुमाने तावदर्थापत्तिरन्तर्भूता (३), सम्भवाभावप्रतिभैतिह्योपमाश्चाप्तवचने । तस्मात् त्रिष्वेव सर्वप्रमाणसिद्धत्वात् **त्रिविधं प्रमाणमिष्टं,** तदाह–तेन त्रिविधेन प्रमाणेन प्रमाणसिद्धिर्भवतीति (४) वाक्यशेषः । **प्रमेयसिद्धिः प्रमाणाद्धि** । प्रमेयं प्रधानं बुद्धिरहङ्कारः पञ्च तन्मात्राणि एकादशेन्द्रियाणि पञ्च महाभूतानि पुरुष इति, एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञा इत्युच्यन्ते, तत्र किंचित् प्रत्यक्षेण साध्यं किञ्चिदनुमानेन किञ्चिदागमेनेति त्रिविधं प्रमाणमुक्तम् ॥ ४ ॥

तस्य किं लक्षणमेतदाह—प्रतिविषयेषु श्रोत्रादीनां शब्दादिविषयेषु अध्यवसायो दृष्टं, प्रत्यक्षमित्यर्थः । **त्रिविधमनुमानमाख्यातं**–पूर्ववत् शेषवत् सामान्यतो दृष्टं चेति । पूर्वमस्यास्तीति पूर्ववद्, यथा मेघोन्नत्या वृष्टिं साधयति पूर्वदृष्टत्वात् । शेषवत् यथा—समुद्रादेकं जलपलं (५) लवणमासाद्य शेषस्याप्यस्ति लवण-

(१) यथा-प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरत्यन्तान्योन्याभावयोर्बहुत्वम् एवं विशिष्टाभावद्वित्वावच्छिन्नाभावसामान्याभावभेदेनाप्यभावस्यानेकविधत्वं विभावनीयम् । (२) इन्द्रियलिङ्गाद्यभावे यदर्थभानं सा प्रतिभा सैव च प्रातिभमार्षापरपर्यायं ज्ञानमिति प्रशस्तपादाचार्याः । (३) जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिःसत्त्वकल्पनमर्थापत्तिरभिमता मीमांसकानाम्, किन्तु देवदत्तो बहिःसत्तावान् जीवित्वे सति गृहेऽसत्त्वादहमिवेति व्यतिरेक्यनुमान एव तस्या अन्तर्भाव इत्यर्थः । सम्भवेति । अत्र सम्भवाभावयोरनुमानप्रत्यक्षान्तर्भावस्य सकलदार्शनिकमतसम्मतत्वादाप्तवचनेऽन्तर्भावश्चिन्त्यः । (४) दृष्टादित्रिविधप्रमाणेऽर्थापत्त्यादिप्रमाणान्तर्भावो भवतीत्यर्थः । (५) पलपरिमाणं जलमित्यर्थः । लवणं–क्षारम् ।

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**
**अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥**

---

भाव इति । सामान्यतो दृष्टम्—देशान्तराद्देशान्तरं प्राप्तं दृष्टम् गतिमच्चन्द्रतारकं चैत्रवत् , यथा चैत्रनामानं देशान्तराद्देशान्तरं प्राप्तमवलोक्य गतिमानयमिति तद्वच्चन्द्रतारकमिति, तथा पुष्पिताम्रदर्शनादन्यत्र पुष्पिता आम्रा इति सामान्यतोदृष्टेन साधयति (१), एतत्सामान्यतो दृष्टम् । किञ्च **तल्लिङ्गलिङ्गिपूर्वकमिति,** तदनुमानं लिङ्गपूर्वकं, यत्र लिङ्गेन लिङ्गी अनुमीयते, यथा—दण्डेन यतिः । लिङ्गिपूर्वकं च, यत्र लिङ्गिना लिङ्गमनुमीयते, यथा—दृष्ट्वा यतिमस्येदं त्रिदण्डमिति (२)। **आप्तश्रुतिराप्तवचनं च ।** आप्ता आचार्या ब्रह्मादयः, श्रुतिर्वेदः, आप्ताश्च श्रुतिश्च आप्तश्रुतिः (३), तदुक्तमाप्तवचनमिति । एवं त्रिविधं प्रमाणमुक्तम् ॥ ५ ॥

'तत्र केन प्रमाणेन किं साध्यम्' उच्यते—**सामान्यतो**दृष्टादनुमानादतीन्द्रियाणामिन्द्रियाण्यतीत्य वर्तमानानां सिद्धिः । प्रधानपुरुषावतीन्द्रियौ सामान्यतोदृष्टेनानुमानेन साध्येते,—यस्मान्महदादिलिङ्गं त्रिगुणम् , यस्येदं त्रिगुणं कार्यं तत् प्रधानमिति, यतश्चाचेतनं चेतनमिवाभाति अतोऽन्योऽधिष्ठाता पुरुष इति । व्यक्तं प्रत्यक्षसाध्यम्, **तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्**–यथेन्द्रो देवराजः, उत्तराः कुरवः, स्वर्गेऽप्सरस' इति परोक्षमाप्तवचनात् सिद्धम् ॥ ६ ॥

अत्र कश्चिदाह 'प्रधानं पुरुषो वा नोपलभ्यते यच्च नोपलभ्यते लोके तन्नास्ति तस्मात् तावपि न स्तः, यथा द्वितीयं शिरस्तृतीयो बाहु'रिति । (४) तदुच्यते—अत्र

---

(१) अत्र अयं देशो भविष्यद्वृष्टिमान् मेघोन्नतिमत्त्वात् तद्देशवत्, समुद्रजलं क्षारमुदधिजलत्वादुद्धृततज्जलवत्, चन्द्रतारकं गतिमत् देशान्तरप्राप्तिमत्त्वाच्चैत्रवदिति क्रमेण त्रिविधस्यानुमानस्य प्रयोगा द्रष्टव्याः । (२) लिङ्गं व्याप्यं, लिङ्गि व्यापकं, लिङ्गलिङ्गिपदेन प्रत्ययोपलक्षणम् , लिङ्गिग्रहणावृत्त्या च लिङ्गमस्यास्तीति पक्षधर्मताज्ञानं दर्शितम् , तेन व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानमित्यनुमानसामान्यलक्षणमिति मिश्राः । (३) द्वन्द्वसमासेन वेदवाक्यानामार्षाणां वाक्यानां च स्वतःप्रमाणत्वमुद्घोषितन्तन्मूलत्वाच्चेतरेषां प्रमाणत्वमिति । (४) तत्रोच्यत इत्यर्थः । अत्र-जगति ।

**सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्यं प्रकृतिविरूपं सरूपं च ॥ ८ ॥**
**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥**

---

सतामप्यर्थानामष्टधोपलब्धिर्न भवति । तद् यथा—इह सतामप्यर्थानामतिदूराद-नुपलब्धिर्दृष्टा यथा—देशान्तरस्थानां चैत्रमैत्रविष्णुमित्राणाम् । **सामीप्याद्** यथा—चक्षुषोऽञ्जनानुपलब्धिः । **इन्द्रियाभिघातात्** यथा—बधिरान्धयोः शब्द-रूपानुपलब्धिः । **मनोऽनवस्थानाद्** यथा—व्यग्रचित्तः सम्यक्कथितमपि नावधा-रयति । **सौक्ष्म्याद्** यथा—धूमोष्मजलनीहारपरमाणवो गगनगता नोपलभ्यन्ते । **व्यवधानाद्** यथा—कुड्येन पिहितं वस्तु नोपलभ्यते । (१) **अभिभवाद्** यथा-सूर्यतेजसाऽभिभूताः ग्रहनक्षत्रतारकादयः नोपलभ्यन्ते । **समानाभिहाराद्** यथा-मुद्गराशौ मुद्गः क्षिप्तः कुवलयामलकमध्ये कुवलयामलके क्षिप्ते, कपोतमध्ये कपोतो नोपलभ्यते समानद्रव्यमध्याहृतत्वात् । एवमष्टधानुपलब्धिः सतामर्थानामिह इष्टा ॥

(२) 'एवं चास्ति किमभ्युपगम्यते प्रधानपुरुषयोरप्येतयोर्वाऽनुपलब्धिः केन हेतुना, केन चोपलब्धिः' । तदुच्यते—**सौक्ष्म्यात् तदनुपलब्धिः**, प्रधानस्येत्यर्थः, प्रधानं सौक्ष्म्यान्नोपलभ्यते यथाकाशे धूमोष्मजलनीहारपरमाणवः, सन्तोऽपि नोप-लभ्यन्ते । कथं तर्हि तदुपलब्धिः ? **कार्यतस्तदुपलब्धिः** । कार्यं दृष्ट्वा कारण-मनुमीयते । अस्ति प्रधानं कारणं यस्येदं कार्यम् , बुद्धिरहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतान्येव तत्कार्यम् । तच्च कार्यं **प्रकृतिविरूपम्**—प्रकृतिः प्रधानं तस्य विरूपं प्रकृतेरसदृशम् , **सरूपं** च समानरूपं च, यथा लोकेऽपि पितुस्तुल्य इव पुत्रो भवत्यतुल्यश्च । येन हेतुना तुल्यमतुल्यं तदुपरिष्टा-द्वक्ष्यामः (३) ॥ ८ ॥

'यदिदं महदादिकार्यं तत् किं प्रधाने सदुताहोस्विदसत आचार्यविप्रत्तिपत्तेरयं

---

( १ ) बलवत्सजातीयग्रहणकृतमग्रहणमभिभवः । ( २ ) शङ्कते—एवमिति । अष्टधाऽनुपलब्धिर्वर्तताम् तथाप्येतेषु केन हेतुना प्रधानपुरुषयोरनुपलब्धिः, केन वा हेतुना तयोरनुपलब्धावपि सिद्धिर्भवतीति शङ्काकर्तुराशयः । ( ३ ) हेतुमदनित्यम् , त्रिगुणमविवेकीति कारिकाद्वय इत्यर्थः ।

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

---

संशयः ( १ ) यतोऽत्र सांख्यदर्शने सत्कार्यं, बौद्धादीनामसत्कार्यम्, यदि सदसन्न भवत्यथासत्सन्न भवतीति विप्रतिषेधः'। तत्राह—**असदकरणात्**। न सदसदसतोऽकरणं तस्मात्सत्कार्यम्, इह लोकेऽसत्करणं नास्ति यथा सिकताभ्यस्तैलोत्पत्तिः, तस्मात् सतः करणादस्ति प्रागुत्पत्तेः प्रधाने व्यक्तम्, अतः सत्कार्यम्। किञ्चान्यत् **उपादानग्रहणात्**, उपादानं कारणं तस्य ग्रहणात्, इह लोके यो येनार्थी स तदुपादानग्रहणं करोति दध्यर्थी क्षीरस्य न तु जलस्य तस्मात् सत्कार्यम्। इतश्च **सर्वसम्भवाभावात्**, सर्वस्य सर्वत्र सम्भवो नास्ति, यथा सुवर्णस्य रजतादौ तृणपांशुसिकतासु ( २ )। तस्मात् सर्वसम्भवाभावात् सत् कार्यम्। इतश्च **शक्तस्य शक्यकरणात्**—इह कुलालः शक्तो मृद्दण्डचक्रचीवररज्जुनीरादिकरणोपकरणं वा शक्यमेव घटं मृत्पिण्डादुत्पादयति, तस्मात् सत्कार्यम्। इतश्च **कारणभावाच्च सत्कार्यम्**। कारणं यल्लक्षणं तल्लक्षणमेव कार्यमपि, यथा यवेभ्यो यवाः, व्रीहिभ्यो व्रीहयः, यदाऽसत्कार्यं स्यात् ततः कोद्रवेभ्यः शालयः स्युर्न च ( ३ ) सन्तीति, तस्मात् सत्कार्यम्। एवं पञ्चभिर्हेतुभिः प्रधाने महदादिलिङ्गमस्ति, तस्मात् सत उत्पत्तिर्नासत इति ॥ ९ ॥

'प्रकृतिविरूपं सरूपं च यदुक्तं तत् कथमिति' उच्यते—व्यक्तं महदादिकार्यम्। हेतुमदिति। हेतुरस्यास्ति हेतुमत्, उपादानं हेतुः कारणं निमित्तमिति पर्यायाः, व्यक्तस्य प्रधानं हेतुरस्ति, अतो **हेतुमत्**। व्यक्तं भूतपर्यन्तम्, हेतुमद् बुद्धितत्त्वं प्रधानेन हेतुमानहङ्कारो बुद्धया, पञ्चतन्मात्राणि एकादशेन्द्रियाणि हेतुमन्त्यहङ्कारेण, आकाशं शब्दतन्मात्रेण हेतुमत्, वायुः स्पर्शतन्मात्रेण हेतुमान्, तेजो रूपतन्मात्रेण हेतुमत्, आपो रसतन्मात्रेण हेतुमत्यः, पृथिवी गन्धतन्मात्रेण हेतुमती, एवं भूतपर्यन्तं व्यक्तं हेतुमत्। किञ्चान्यत् **अनित्यं**, यस्मादन्यस्मादुत्पद्यते, यथा मृत्पिण्डादुत्पद्यते घटः स चानित्यः। **किञ्चाव्यापि**, असर्वगमित्य-

---

( १ ) आचार्यविप्रतिपत्तिमेवाह—यत इति। विप्रतिपत्तिबीजं प्रदर्शयन्नाह पूर्वपक्षी—यदीति। ( २ ) अत्र चकारोऽपेक्षितः, अथवा तैलस्येति शेषोऽत्र कर्तव्यः। ( ३ ) न भवन्तीत्यर्थः।

र्थः, यथा प्रधानपुरुषौ सर्वगतौ नैवं व्यक्तम्। किञ्चान्यत् सक्रियं, संसारकाले संसरति—त्रयोदशविधेन (१) करणेन संयुक्तं सूक्ष्मं शरीरमाश्रित्य संसरति, तस्मात् सक्रियम्। किञ्चान्यत् (२) अनेकं, बुद्धिरहङ्कारः पञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्चमहाभूतानि चेति। किञ्चान्यत् आश्रितम्, स्वकारणमाश्रयते, प्रधानाश्रिता बुद्धिः, बुद्धिमाश्रितोऽहङ्कारः, अहङ्काराश्रितान्येकादशेन्द्रियाणि पञ्चतन्मात्राणि, पञ्चतन्मात्राश्रितानि पञ्चमहाभूतानीति। किञ्च लिङ्गं लययुक्तं, लयकाले पञ्चमहाभूतानि तन्मात्रेषु लीयन्ते तान्येकादशेन्द्रियैः सहाहङ्कारे स च बुद्धौ सा च प्रधाने लयं यातीति। तथा **सावयवम्**, अवयवाः शब्दस्पर्शरसरूपगन्धाः, तैः सह (३)। किञ्च **परतन्त्रं,** नात्मनः प्रभवति, यथा प्रधानतन्त्रा बुद्धिः बुद्धितन्त्रोऽहङ्कारः, अहङ्कारतन्त्राणि तन्मात्राणीन्द्रियाणि च तन्मात्रतन्त्राणि पञ्च महाभूतानि च। एवं परतन्त्रं परायत्तं व्याख्यातं व्यक्तम्।

अथोऽव्यक्तं व्याख्यास्यामः—**विपरीतमव्यक्तम्**। एतैरेव गुणैर्यथोक्तैर्विपरीतमव्यक्तम्, हेतुमद् व्यक्तमुक्तम्, न हि प्रधानात् परं किञ्चिदस्ति, यतः प्रधानस्यानुत्पत्तिः, तस्मादहेतुमदव्यक्तम्। तथाऽनित्यं च व्यक्तं, नित्यमव्यक्तमनुत्पाद्यत्वात्, न हि भूतानीव कुतश्चिदुत्पद्यत इत्यव्यक्तं (४) प्रधानम्। किञ्चाव्यापि व्यक्तं, व्यापि प्रधानं सर्वगतत्वात्। सक्रियं व्यक्तमक्रियमव्यक्तं सर्वगतत्वादेव। तथाऽनेकं व्यक्तमेकं प्रधानं कारणत्वात्, त्रयाणां लोकानां प्रधानमेकं कारणं, तस्मादेकं प्रधानम्। तथाश्रितं व्यक्तमनाश्रितमव्यक्तमकार्यत्वात्, न हि प्रधानात् किञ्चिदस्ति परं यस्य प्रधानं कार्यं स्यात्। तथा व्यक्तं लिङ्गम्, अलिङ्गमव्यक्तं नित्यत्वात्, महदादिलिङ्गं प्रलयकाले परस्परं प्रलीयते नैवं प्रधानं, तस्मादलिङ्गं प्रधानम्। तथा सावयवं व्यक्तं, निरवयवमव्यक्तं, न हि शब्दस्पर्शरसरूपगन्धाः प्रधाने सन्ति (५)। तथा परतन्त्रं व्यक्तं, स्वतन्त्रमव्यक्तं प्रभवत्यात्मनः ॥ १० ॥

---

(१) बुद्ध्यहङ्कारमनांसि त्रीण्याभ्यन्तरकरणानि बुद्धिकर्मभेदेन दशविधानि इन्द्रियाणि बाह्यानीत्येवं वक्ष्यमाणत्रयोदशकरणेनेत्यर्थः। (२) प्रतिपुरुषं बुद्ध्यादीनां भेदात्पृथिव्याद्यपि शरीरघटादिभेदादनेकविधमेवेति मिश्राः। (३) अवयवावयविसंयोगविशिष्टमिति तत्त्वकौमुदीकारः। (४) इत्यस्माद्धेतोः प्रधानमव्यक्तमुच्यत इत्यर्थः। (५) पृथिव्यादीनां परस्परसंयोगेऽपि प्रधानस्य न बुद्ध्या

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

---

एवं व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तं, साधर्म्यमुच्यते (१)यदुक्तं 'सरूपं च'। **त्रिगुणं** व्यक्तं, सत्त्वरजस्तमांसि त्रयो गुणा यस्येति । **अविवेकि** व्यक्तं न विवेकोऽस्यास्तीति, इदं व्यक्तमिमे गुणा इति न विवेकं कर्तुं याति, अयं गौरयमश्व इति यथा, ये गुणास्तद्व्यक्तं यद्व्यक्तं ते च गुणा इति । तथा **विषयो** व्यक्तं, भोग्यमित्यर्थः, सर्वपुरुषाणां विषयभूतत्वात् । तथा **सामान्यं** व्यक्तं, मूल्यदासीवत् सर्वसाधारणत्वात् । **अचेतनं** व्यक्तं, सुखदुःखमोहान् न चेतयतीत्यर्थः । तथा **प्रसवधर्मि** व्यक्तं, तद् यथा—बुद्धेरहङ्कारः प्रसूयते तस्मात् पञ्चतन्मात्राणि एकादशेन्द्रियाणि च प्रसूयन्ते तन्मात्रेभ्यः पञ्चमहाभूतानि। एवमेते व्यक्तधर्माः प्रसवधर्मान्ता उक्ताः, एवमेभिरव्यक्तं सरूपं, यथा व्यक्तं तथा प्रधानमिति । तत्र त्रिगुणं व्यक्तमव्यक्तमपि त्रिगुणं यस्यैतन्महदादिकार्यं त्रिगुणम्, इह यदात्मकं कारणं तदात्मकं कार्यमिति, यथा कृष्णतन्तुकृतः कृष्ण एव पटो भवति । तथाऽविवेकि व्यक्तं, प्रधानमपि गुणैर्न भिद्यते अन्ये गुणाः अन्यत् प्रधानमेवं विवेक्तुं न याति तदविवेकि प्रधानम् । तथा विषयो व्यक्तं प्रधानमपि सर्वपुरुषविषयभूतत्वात् विषय इति। तथा सामान्यं व्यक्तं प्रधानमपि, सर्वसाधारणत्वात् । तथाऽचेतनं व्यक्तं प्रधानमपि सुखदुःखमोहान् न चेतयतीति, कथम्? अनुमीयते—इह ह्यचेतनान्मृत्पिण्डादचेतनो घट उत्पद्यते । तथा प्रसवधर्मि व्यक्तं प्रधानमपि प्रसवधर्मि, यतः प्रधानाद् बुद्धिरुत्पद्यते । एवं प्रधानमपि व्याख्यातम् ।

इदानीं तद्विपरीतस्तथा च पुमानित्येतद् व्याख्यायते । तद्विपरीतस्ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीतः पुमान् । तद् यथा—त्रिगुणं व्यक्तमव्यक्तं च, अगुणः पुरुषः । अविवेकि व्यक्तमव्यक्तं च, विवेकी पुरुषः । तथा विषयो व्यक्तमव्यक्तं च, अविषयः पुरुषः । तथा सामान्यं व्यक्तमव्यक्तं च, असामान्यः पुरुषः । अचेतनं व्यक्तमव्यक्तं च, चेतनः पुरुषः, सुखदुःखमोहांश्चेतयति सञ्जानीते तस्माच्चेतनः पुरुष इति । प्रसवधर्मि व्यक्तं प्रधानं च, अप्रसवधर्मी पुरुषः,

---

दिभिः संयोगस्तादात्म्यात्, नापि सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावादिति मिश्राः ।

(१) यस्मादित्यर्थः ।

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥**

न हि किञ्चित् पुरुषात् प्रसूयते । तस्मादुक्तं तद्विपरीतः पुमानिति । ( १ ) तदुक्तं **'तथा च पुमान्'** इति । तत् पूर्वस्यामार्यायां प्रधानमहेतुमद् यथा व्याख्यातं तथा च पुमान्, तद् यथा हेतुमदनित्यमित्यादि व्यक्तं तद्विपरीतमव्यक्तं, तत्र हेतुमद् व्यक्तमहेतुमत् प्रधानं, तथा च पुमानहेतुमान्, अनुत्पाद्यत्वात् । अनित्यं व्यक्तं नित्यं प्रधानं, तथा च नित्यः पुमान् । अव्यापि व्यक्तं व्यापि प्रधानम्, तथा च व्यापी पुमान, सर्वगतत्वात् । सक्रियं व्यक्तमक्रियं प्रधानम्, तथा च पुमानक्रियः, सर्वगतत्वादेव । अनेकं व्यक्तमेकमव्यक्तं, तथा च पुमानप्येकः ( २ ) । आश्रितं व्यक्तमनाश्रितमव्यक्तं, तथा च पुमाननाश्रितः । लिङ्गं व्यक्तमलिङ्गं प्रधानं तथा च पुमानप्यलिङ्गः—न क्वचिल्लीयत इति । सावयवं व्यक्तं निरवयवमव्यक्तं तथा च पुमान् निरवयवः, न हि पुरुषे शब्दादयोऽवयवाः सन्ति । किञ्च परतन्त्रं व्यक्तं स्वतन्त्रमव्यक्तं, तथा च पुमानपि स्वतन्त्रः, आत्मनः प्रभवतीत्यर्थः ॥ ११ ॥

एवमेतदव्यक्तपुरुषयोः साधर्म्यं व्याख्यातं पूर्वस्यामार्यायाम्, व्यक्तप्रधानयोः साधर्म्यं पुरुषस्य वैधर्म्यं च त्रिगुणमविवेकीत्यादि प्रकृत्यार्यायां ( ३ ) व्याख्यातम् । यत्र यदुक्तं 'त्रिगुणमिति व्यक्तमव्यक्तं च' तत् के ते गुणा इति तत्स्वरूपप्रतिपादनायेदमाह—प्रीत्यात्मका अप्रीत्यात्मका विषादात्मकाश्च, गुणाः सत्त्वरजस्तमांसीत्यर्थः । तत्र प्रीत्यात्मकं सत्त्वं, प्रीतिः सुखं तदात्मकमिति । अप्रीत्यात्मकं रजः, अप्रीतिर्दुःखम् । विषादात्मकं तमः, विषादो मोहः । तथा **प्रकाशप्रवृत्तिनियमार्थाः** । अर्थशब्दः सामर्थ्यवाची, प्रकाशार्थं सत्त्वं, प्रकाशसमर्थमित्यर्थः । प्रवृत्त्यर्थं रजः, प्रवृत्तिसमर्थमित्यर्थः । नियमार्थं तमः, स्थितौ समर्थमित्यर्थः । प्रकाशक्रियास्थितिशीला गुणा इति । तथाऽन्यो**न्याभिभवाश्रयजननमिथुनवृत्त-**

( १ ) अत्र व्यक्ताव्यक्ताभ्यां वैधर्म्यमभिधायाव्यक्तसाधर्म्यमाहेति अपेक्षितम् एतदेव विवृणोति—तदिति । ( २ ) एक इति, चिन्त्यमिदं पुरुषबहुत्वस्य वक्ष्यमाणत्वात् । तथा चैकत्वं विहाय अहेतुमत्वनित्यत्वव्यापकत्वनिष्क्रियत्वानाश्रितत्वालिंगत्वनिरवयवत्वस्वतन्त्रत्वादिधर्मवत्वेन पुरुषस्य प्रधानसाधर्म्यमनेकत्वं च व्यक्तसाधर्म्यमिति अत्र व्याख्या युक्तेति विभावनीयम् । ( ३ ) अत्र प्रकृतार्यायामिति युक्तः पाठः,

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

---

यश्च। अन्योन्याभिभवाः अन्योन्याश्रयाः अन्योन्यजननाः अन्योऽन्यमिथुनाः अन्योन्यवृत्तयश्च ते तथोक्ताः। अन्योऽन्याभिभवा इति—अन्योऽन्यं परस्परमभिभवन्तीति, प्रीत्यप्रीत्यादिभिर्धर्मैराविर्भवन्ति, यथा यदा सत्त्वमुत्कटं भवति तदा रजस्तमसी अभिभूय स्वगुणेन प्रीतिप्रकाशात्मकेनावतिष्ठते (१), यदा रजस्तदा सत्त्वतमसी अप्रीतिप्रवृत्त्यात्मना धर्मेण, यदा तमस्तदा सत्त्वरजसी विषादस्थित्यात्मकेन इति। तथाऽन्योन्याश्रयाश्च द्व्यणुकवद् गुणाः (२)। अन्योन्यजननाः—यथा मृत्पिण्डो घटं जनयति (३)। तथाऽन्योन्यमिथुनाश्च (४)—यथा स्त्रीपुंसौ अन्योन्यमिथुनौ तथा गुणाः। उक्तं च—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः। रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते॥

परस्परसहाया इत्यर्थः। अन्योन्यवृत्तयश्च परस्परं वर्तन्ते 'गुणा गुणेषु वर्तन्त' इति वचनात्। यथा सुरूपा सुशीला स्त्री सर्वसुखहेतुः, सपत्नीनां सैव दुःखहेतुः, सैव रागिणां मोहं जनयति, एवं सत्त्वं रजस्तमसोर्वृत्तिहेतुः। यथा राजा सदोद्युक्तः प्रजापालने दुष्टनिग्रहे शिष्टानां सुखमुत्पादयति, दुष्टानां दुःखं मोहं च, एवं रजः सत्त्वतमसोर्वृत्तिं जनयति। तथा तमः स्वरूपेणावरणात्मकेन सत्त्वरजसोर्वृत्तिं जनयति, यथा मेघाः खमावृत्य जगतः सुखमुत्पादयन्ति, ते वृष्ट्या कर्षकाणां कर्षणोद्योगं जनयन्ति, विरहिणां मोहम्, एवमन्योन्यवृत्तयो गुणाः॥ १२॥

किञ्चान्यत्—**सत्त्वं लघु प्रकाशकं** च, यदा सत्त्वमुत्कटं भवति तदा लघून्य-

---

अथवा प्रकृतिसम्बन्धिन्यामित्यर्थेनायमपि समीचीन एव, प्रकृत्य प्रस्तुत्येति वा। (१) आविर्भवति इदमग्रिमवाक्यद्वयेऽप्यनुषञ्जनीयम्। (२) यथा द्व्यणुकाः परस्परं परमाण्वाश्रितास्तथैते गुणा अपीत्यर्थः। सत्त्वं प्रवृत्तिनियमावाश्रित्य प्रकाशयति, रजः प्रकाशनियमावाश्रित्य प्रवर्तयति, तमः प्रकाशप्रवृत्ती आश्रित्य नियमयति, त्रिदण्डविष्टम्भवदमी वेदितव्या इति माठरः। (३) अत्र 'जननं' गुणानां सदृशरूपो परिणामो ग्राह्यः, सांख्यमते आरम्भरूपस्य तस्यासम्भवादिति बोध्यम्। (४) अन्योन्यमिथुनवृत्तयः, अविनाभाववृत्तय इति मिश्राः। एतन्मते वृत्तिपदस्य

**अविवेक्यादिः सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात् ।**
**कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥ १४ ॥**

---

ज्ञानि बुद्धिप्रकाशश्च प्रसन्नतेन्द्रियाणां भवति । **उपष्टम्भकं चलं च रजः,** उपष्टभ्नातीत्युपष्टम्भकमुद्द्योतकं, यथा वृषो वृषदर्शने उत्कटमुपष्टम्भं करोति, एवं रजोवृत्तिः । तथा रजश्च चलं दृष्टं, रजोवृत्तिश्चलचित्तो भवति । **गुरु वरणकमेव तमः,** यदा तम उत्कटं भवति तदा गुरूण्यङ्गान्यावृतानीन्द्रियाणि भवन्ति स्वार्थासमर्थानि, अत्राह (१) 'यदि गुणाः परस्परं विरुद्धाः स्वमते नैव कमर्थं निष्पादयन्ति, तर्हि कथं !' (२)**प्रदीपवच्चार्थतो वृत्तिः,** प्रदीपेन तुल्यं प्रदीपवत् ; अर्थतः(३)साधना वृत्तिरिष्टा, यथा प्रदीपः परस्परविरुद्धतैलाग्निवर्तिसंयोगादर्थप्रकाशान् जनयति, एवं सत्त्वरजस्तमांसि परस्परं विरुद्धान्यर्थं निष्पादयन्ति ॥ १३ ॥

अन्तरप्रश्नो भवति-'त्रिगुणमविवेकि विषय' इत्यादिना प्रधानं व्यक्तं च व्याख्यातं, तत्र प्रधानमुपलभ्यमानं महदादि च त्रिगुणम् , अविवेक्यादीति च कथमवगम्यते' ? तत्राह-योऽयम**विवेक्यादि**र्गुणः स त्रैगुण्यात् । 'महदादौ व्यक्ते नायं सिध्यति' अत्रोच्यते तद्विपर्ययाभावात्, तस्य विपर्ययस्तद्विपर्ययस्तस्याभावस्तद्विपर्ययाभावः, तस्मात् सिद्धमव्यक्तम् (४) । यथा यत्रैव तन्तवस्तत्रैव पटः, अन्ये तन्तवोऽन्यः पटो न, कुतः ? **तद्विपर्ययाभावात्** । एवं व्यक्ताव्यक्तसम्पन्नो भवति (५), दूरं प्रधानमासन्नं व्यक्तं, यो व्यक्तं पश्यति स प्रधानमपि पश्यति, तद्विपर्ययाभावात् । इतश्चाव्यक्तं सिद्धं **कारणगुणात्मकत्वात् कार्यस्य,** लोके यदात्मकं कारणं तदात्मकं कार्यमपि, यथा कृष्णेभ्यस्तन्तुभ्यः कृष्ण एव पटो भवति । एवं महदादिलिङ्गमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि, यदात्मकमव्यक्तमपि सिद्धम् ॥ १४ ॥

---

द्वन्द्वान्ते श्रूयमाणस्यान्योन्याभिभववृत्तय इत्यादिचतुर्णां भेदोदाहरणानि बोध्यानि ।

(१) पूर्वपक्षीत्यर्थः ।

(२) समाधत्ते-प्रदीपवदिति ।

(३) पुरुषार्थवशादित्यर्थः ।

(४) अत्रैगुण्याभावाद् अव्यक्तमविवेक्यादिगुणवदिति सिद्धमित्यर्थः ।

(५) अविवेक्यादिर्गुण इति शेषः ।

**भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूपस्य ॥ १५ ॥**

'त्रैगुण्यादविवेक्यादिर्व्यक्ते सिद्धस्तद्विपर्ययाभावात् , एवं कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धमित्येतन्मिथ्या, लोके यन्नोपलभ्यते तन्नास्ति' इति न वाच्यम् , सतोऽपि पाषाणगन्धादेरनुपलम्भात् , एवं प्रधानमप्यस्ति किन्तु नोपलभ्यते, तदाह—कारणमस्त्यव्यक्तमिति क्रियाकारकसम्बन्धः। **भेदानां परिमाणात्**—लोके यत्र कर्तास्ति तस्य परिमाणं दृष्टं यथा कुलालः परिमितैर्मृत्पिण्डैः परिमितानेव घटान् करोति, एवं महदपि महदादिलिङ्गं परिमितं भेदतः, प्रधानकार्यमेका बुद्धिरेकोऽहङ्कारः पञ्च तन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतानीत्येवं भेदानां परिमाणादस्ति प्रधानं कारणं यद् व्यक्तं परिमितमुत्पादयति, यदि प्रधानं न स्यात्, तदा निष्परिमाणमिदं व्यक्तमपि न स्यात् , परिमाणाच्च भेदानामस्ति प्रधानं यस्माद् व्यक्तमुत्पन्नम् । तथा **समन्वयात्** इह लोके प्रसिद्धिर्दृष्टा, यथा व्रतधारिणं वटुं दृष्ट्वा समन्वयति (१) नूनमस्य पितरौ ब्राह्मणाविति, एवमिदं त्रिगुणं महदादिलिङ्गं दृष्ट्वा साधयामोऽस्य यत् कारणं (२) भविष्यतीति, अतः समन्वयादस्ति प्रधानम् । तथा **शक्तितः प्रवृत्तेश्च**—इह यो यस्मिन् शक्तः स तस्मिन्नेवार्थे प्रवर्तते, यथा कुलालो घटस्य करणे समर्थो घटमेव करोति न पटं रथं वा । तथा अस्ति प्रधानं कारणं, कुतः ? **कारणकार्यविभागात्**—करोतीति कारणम् , क्रियत इति कार्यम् , कारणस्य कार्यस्य च विभागो यथा—घटो दधिमधूदकपयसां धारणे समर्थो न तथा तत्कारणं मृत्पिण्डः, मृत्पिण्डो वा घटं निष्पादयति न चैवं घटो मृत्पिण्डम् , एवं महदादिलिङ्गं दृष्ट्वानुमीयते—अस्ति विभक्तं तत्कारणं यस्य विभाग इदं व्यक्तमिति (३)। इतश्च **अविभागाद् वैश्वरूपस्य**—विश्वं जगत् , तस्य रूपं व्यक्तिः, विश्वरूपस्य भावो वैश्वरूपं, तस्याविभागादस्ति प्रधानं, यस्मात् त्रैलोक्यस्य पञ्चानां पृथिव्यादीनां महाभूतानां परस्परं विभागो नास्ति

(१) समानरूपं कारणं साधयति। (२) तत्त्रिगुणं भविष्यतीत्यर्थः। (३) कारणे कार्यस्य सत्त्वाद्यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते, एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते, तथा पृथिव्यादीन्यपि तन्मात्रादिरूपकारणादाविर्भवन्ति विभज्यन्त इति

**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च।**
**परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥**

महाभूतेष्वन्तर्भूतास्त्रयो लोका इति, पृथिव्यापस्तेजो वायुराकाशमिति एतानि पञ्चमहाभूतानि प्रलयकाले सृष्टिक्रमेणैवाविभागं यान्ति तन्मात्रेषु परिणामिषु तन्मात्राण्येकादशेन्द्रियाणि चाहङ्कारे अहङ्कारो बुद्धौ बुद्धिः प्रधाने, एवं त्रयो लोकाः प्रलयकाले प्रकृतावविभागं गच्छन्ति, तस्मादविभागात् क्षीरदधिवद् (१) व्यक्ताव्यक्तयोरस्त्यव्यक्तं कारणम् ॥ १५ ॥

अतश्च अव्यक्तं प्रख्यातं कारणमस्ति यस्मान्महदादिलिङ्गं प्रवर्तते । **त्रिगुणतः** त्रिगुणात् , सत्त्वरजस्तमांसि गुणा यस्मिन् तत् त्रिगुणम् । तत् किमुक्तं भवति ? सत्त्वरजस्तमसां साम्यावस्था प्रधानम् (२) । तथा **समुदयात्** , यथा गङ्गास्रोतांसि त्रीणि रुद्रमूर्द्धनि पतितानि एकं स्रोतो जनयन्ति, एवं त्रिगुणमव्यक्तमेकं व्यक्तं जनयति, यथा वा तन्तवः समुदिताः पटं जनयन्ति, एवमव्यक्तं गुणसमुदयान्महदादि जनयतीति त्रिगुणतः समुदयाच्च व्यक्तं जगत् प्रवर्तते । '(३) यस्मादेकस्मात् प्रधानाद् व्यक्तं तस्मादेकरूपेण भवितव्यम्' । नैष दोषः, **परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात्।** एकस्मात् प्रधानात् त्रयो लोकाः समुत्पन्नास्तुल्यभावा न भवन्ति, देवाः सुखेन युक्ताः, मनुष्या दुःखेन, तिर्यञ्चो मोहेन, एकस्मात् प्रधानात् प्रवृत्तं व्यक्तं प्रतिप्रतिगुणाश्रयविशेषात् परिणामतः सलिलवद् भवति, प्रतिप्रतीति वीप्सा, गुणानामाश्रयो गुणाश्रयस्तद्विशेषस्तं गुणाश्रयविशेषं प्रति-

---

अव्यक्तपर्यन्तं स्वस्वकारणाद्विभाग इति मिश्राः । (१) प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो निविशमानास्तिरोभवन्ति, तत्कारणरूपमेवानभिव्यक्तकार्यापेक्षयाऽव्यक्तमिति व्यवह्रियते, एवं पृथिव्यादयोऽपि तन्मात्रादिकारणं विशन्तः स्वस्वकारणमव्यक्तयन्तीति सोऽयमविभागो वैश्वरूप्यस्य कार्यस्येति वाचस्पतिमतम् ।

(२) परिणामस्वभावानां गुणानां क्षणमपि परिणामं विहायावस्थानाऽसंभवात्सत्त्वादिरूपतया प्रधानस्य प्रवृत्तिरिति मिश्राः । प्रधाने सत्त्वादीनामवस्थानात् बहुत्वसंभवात्त्रिगुणतः प्रवृत्तिस्त्रिधा व्यवहारोऽत एकस्मात्तन्तोः पटासंभववत्कथमेकं प्रधानमनेककार्यजनकमिति निरस्तमिति माठरः ।

(३) शङ्कते यस्मादिति । एकरूपात्कारणात्कथं विचित्रकार्योत्पत्तिरिति शङ्काभिप्रायः । समाधत्ते–नैष इति ।

सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

निधाय (१) प्रतिप्रतिगुणाश्रयविशेषपरिणामात् प्रवर्तते व्यक्तं, यथा-आकाशादेकरसं सलिलं पतितं नानारूपात् संश्लेषाद् भिद्यते तत्तद्रसान्तरैः(२)एवमेकस्मात् प्रधानात् प्रवृत्तास्त्रयो लोका नैकस्वभावा भवन्ति, देवेषु सत्त्वमुत्कटं रजस्तमसी उदासीने तेन तेऽत्यन्तसुखिनः, मनुष्येषु रज उत्कटं भवति सत्त्वतमसी उदासीने तेन तेऽत्यन्तदुःखिनः, तिर्यक्षु तम उत्कटं भवति सत्त्वरजसी उदासीने तेन तेऽत्यन्तमूढाः ॥ १६ ॥

एवमार्याद्वयेन प्रधानस्यास्तित्वमवगम्यते, इतश्चोत्तरं पुरुषास्तित्वप्रतिपादनार्थमाह। यदुक्तं 'व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षः प्राप्यत' इति, तत्र व्यक्तादनन्तरमव्यक्तं पञ्चभिः कारणैरधिगतं व्यक्तवत, पुरुषोऽपि सूक्ष्मस्तस्याधुनाऽनुमितास्तित्वं प्रतिक्रियते (३) अस्ति पुरुषः, कस्मात्? **सङ्घातपरार्थत्वात्**-योऽयं महदादिसङ्घातः स पुरुषार्थ इत्यनुमीयते, अचेतनत्वात् पर्यङ्कवत्, यथा पर्यङ्कः प्रत्येकं गात्रोत्पलकपादपीठतूलीप्रच्छादनपटोपधानसङ्घातः परार्थो न हि स्वार्थः, पर्यङ्कस्य न हि किञ्चिदपि गात्रोत्पलाद्यवयवानां परस्परं कृत्यमस्ति, अतोऽवगम्यतेऽस्ति पुरुषो यः पर्यङ्के शेते यस्यार्थं पर्यङ्कस्तत्परार्थम्,(४) इदं शरीरं पञ्चानां महाभूतानां सङ्घातो वर्तते, अस्ति पुरुषो यस्येदं भोग्यं शरीरं भोग्यमहदादिसङ्घातरूपं समुत्पन्नमिति। इतश्चात्मास्ति-**त्रिगुणादिविपर्ययात्**। यदुक्तं पूर्वस्यामार्यायां 'त्रिगुणमविवेकि विषय' इत्यादि, तस्माद्विपर्ययात्, येनोक्तं तद्विपरीतस्तथा च पुमान्। **अधिष्ठानात्**, यथेह लङ्घनप्लवनधावनसमर्थैरश्वैर्युक्तो रथः सारथिनाऽधिष्ठितः प्रवर्तते तथात्माऽधिष्ठानाच्छरीरमिति (५)। तथा चोक्तं षष्टितन्त्रे-'पुरुषाधिष्ठितं प्रधानं प्रवर्तते'। अतोऽस्त्यात्मा—**भोक्तृत्वात्**। यथा मधुराम्ललवणकटुतिक्तकषायषड्रसोपबृंहितस्य संयुक्तस्यान्नस्य साध्यते (६) एवं महदादिलिङ्गस्य भोक्तृत्वाभावादस्ति स आत्मा यस्येदं भोग्यं शरीरमिति। इतश्च **कैवल्यार्थं प्रवृत्तेश्च**-

(१) अवलम्ब्य। (२) नारिकेलतालतालीबिल्वचिरबिल्वतिन्दुकामलककपित्थफलाश्रितैस्तत्तद्रसैरित्यर्थः। (३) अनुमानेनास्तित्वं प्रतिष्ठाप्यत इत्यर्थः।
(४) पर्यङ्कवदिति दृष्टान्ते परार्थत्वं प्रसाध्य दार्ष्टान्तिके तत्साधयति-इदमिति।
(५) अत्र शरीरं प्रयत्नवदात्माधिष्ठितं चेष्टावत्त्वाद् रथवदित्यनुमानप्रयोगो द्रष्टव्यः।
(६) अन्नस्य भोक्तृत्वाभावाद्भोग्यत्वेन भोक्ता देवदत्तादिः यथा साध्यत इत्यर्थः।

**जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**
**तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

---

केवलस्य भावः कैवल्यं तन्निमित्तं या च प्रवृत्तिस्तस्याः स्वकैवल्यार्थं प्रवृत्तेः (१) सकाशादनुमीयते—अस्त्यात्मेति, यतः सर्वो विद्वानविद्वांश्च संसारसन्तानक्षयमिच्छति । एवमेभिर्हेतुभिरस्त्यात्मा शरीराद् व्यतिरिक्तः ॥ १७ ॥

'अथ स किमेकः सर्वशरीरेऽधिष्ठाता मणिरसनात्मकसूत्रवत् आहोस्विद् बहव आत्मानः प्रतिशरीरमधिष्ठातार' इत्यत्रोच्यते-जन्म च मरणञ्च करणानि च जन्ममरणकरणानि तेषां **प्रतिनियमात्**, प्रत्येकनियमादित्यर्थः । यद्येक एव आत्मा स्यात् तत एकस्य जन्मनि सर्व एव जायेरन्, एकस्य मरणे सर्वेऽपि म्रियेरन्, एकस्य करणवैकल्ये बाधिर्यान्धत्वमूकत्वकुणित्वखञ्जत्वलक्षणे सर्वेऽपि बधिरान्धमूककुणिखञ्जाः स्युः, न चैवं भवति, तस्माज्जन्ममरणकरणानां प्रतिनियमात् (२) पुरुषबहुत्वं सिद्धम् । इतश्च **अयुगपत्प्रवृत्तेश्च**, युगपदेककालं न युगपदयुगपत् प्रवर्तनं, यस्मादयुगपद्धर्मादिषु प्रवृत्तिर्दृश्यते, एके धर्मे प्रवृत्ता अन्येऽधर्मे वैराग्येऽन्ये ज्ञानेऽन्ये प्रवृत्ताः, तस्मादयुगपत्प्रवृत्तेश्च बहव इति सिद्धम् । किञ्चान्यत् **त्रैगुण्यविपर्ययाच्चैव**, त्रिगुणभावविपर्ययाच्च **पुरुषबहुत्वं सिद्धम्** । यथा सामान्ये जन्मनि एकः सात्त्विकः सुखी, अन्यो राजसो दुःखी, अन्यस्तामसो मोहवान्, एवं त्रैगुण्यविपर्ययाद्बहुत्वं सिद्धमिति ॥ १८ ॥

अकर्ता पुरुष इत्येतदुच्यते-(३) **तस्माच्च विपर्यासात्**, तस्माच्च यथोक्तत्रैगुण्यविपर्यासाद्विपर्ययात्—निर्गुणः पुरुषो विवेकी भोक्तेत्यादिगुणानां पुरुषस्य यो विपर्यास उक्तस्तस्मात्, सत्त्वरजस्तमःसु कर्तृभूतेषु साक्षित्वं सिद्धं पुरुषस्येति योऽयमधिकृतो बहुत्वं प्रति (४), गुणा एव कर्तारः प्रवर्तन्ते, साक्षी न प्रवर्तते नापि निवर्तत एव । किञ्चान्यत् **कैवल्यं** केवलभावः, कैवल्यमन्यत्वमित्यर्थः, त्रिगुणेभ्यः

---

(१) मुमुक्षूणां शास्त्राणां चेति शेषः । (२) व्यवस्थातः, अत एवोक्तं न्यायसूत्रे 'व्यवस्थातो नानेति' । (३) पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाहेति मिश्रः । (४) यः पुरुषः 'पुरुषबहुत्वं सिद्धमि'त्यत्रोद्दिष्ट इत्यर्थः ।

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥**
**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

---

केवलोऽन्यः (१)। **माध्यस्थ्यं** मध्यस्थभावः, परिव्राजकवत् मध्यस्थः पुरुषः। यथा कश्चित् परिव्राजको ग्रामीणेषु कर्षणार्थेषु प्रवृत्तेषु केवलो मध्यस्थः, पुरुषोऽप्येवं गुणेषु प्रवर्तमानेषु न प्रवर्तते। तस्माद् **द्रष्टृत्वमकर्तृभावश्च,** यस्मान्मध्यस्थस्तस्माद्द्रष्टा तस्मादकर्ता पुरुषतेषां कर्मणामिति, सत्त्वरजस्तमांसि त्रयो गुणाः कर्मकर्तृभावेन प्रवर्तन्ते न पुरुषः, एवं पुरुषस्यास्तित्वं च सिद्धम् ॥ १९ ॥

(२) 'यस्मादकर्ता पुरुषस्तत्कथमध्यवसायं करोति धर्मं करिष्याम्यधर्मं न करिष्यामीत्यतः कर्ता भवति, न च कर्ता पुरुष एवमुभयथा दोषः स्यादिति', अत उच्यते—इह पुरुषश्चेतनावान् तेन चेतनावभाससंयुक्तं महदादिलिङ्गं चेतनावदिव भवति, यथा लोके घटः शीतसंयुक्तः शीतः, उष्णसंयुक्त उष्णः, एवं महदादि लिङ्गं तस्य संयोगात् पुरुषसंयोगाच्चेतनावदिव भवति, तस्माद् गुणा अध्यवसायं कुर्वन्ति न पुरुषः। यद्यपि लोके पुरुषः कर्ता, गन्तेत्यादि प्रयुज्यते तथाप्यकर्ता पुरुषः। कथम् ? **गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः।** गुणानां कर्तृत्वे सति उदासीनोऽपि पुरुषः कर्तेव भवति, न कर्ता। अत्र दृष्टान्तो भवति—यथाऽचौरश्चौरैः सह गृहीतश्चौर इत्यवगम्यते, एवं त्रयो गुणाः कर्तारः तैः संयुक्तः पुरुषोऽकर्ताऽपि कर्त्ता भवति कर्तृसंयोगात्। एवं व्यक्ताव्यक्तज्ञानां बिभागो विख्यातः, (३)यद्विभागान्मोक्षप्राप्तिरिति ॥ २० ॥

'अथैतयोः प्रधानपुरुषयोः किं हेतुः सङ्घातः' उच्यते—**पुरुषस्य** प्रधानेन सह संयोगो **दर्शनार्थं**—प्रकृतिं महदादिकार्यं भूतपर्यन्तं पुरुषः पश्यति एतदर्थम्,

---

( १ ) अत्रैगुण्याच्चास्य कैवल्यम्, आत्यन्तिको दुःखत्रयाभावः कैवल्यम्, तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धमिति मिश्राः। ( २ ) आक्षिपति-यस्मादिति। पुरुषस्याकर्तृत्वाङ्गीकारेऽध्यवसायानुपपत्तिस्तदुपपत्तावकर्तृत्वस्य सांख्यमतसिद्धस्यानुपपत्तिरित्युभयतः पाशारज्जुरित्याक्षेपाशयः। (३) व्यक्ताव्यक्तज्ञविवेकात्।

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥

---

सिद्धिरुच्यते—**ऊहो** यथा कश्चिन्नित्यमूहते किमिह सत्यं किं परं किं नैःश्रेयसं किं कृत्वा कृतार्थः स्याम्, इति चिन्तयतो ज्ञानमुत्पद्यते प्रधानादन्य एव पुरुष इतोऽन्या बुद्धिरन्योऽहङ्कारोऽन्यानि तन्मात्राणीन्द्रियाणि पञ्च महाभूतानीत्येकं तत्त्वज्ञानमुत्पद्यते येन मोक्षो भवति, एषा (१)ऊहाख्या प्रथमा सिद्धिः। तथा **शब्दज्ञानात्** प्रधानपुरुषबुद्ध्यहङ्कारतन्मात्रेन्द्रियपञ्चमहाभूतविषयं ज्ञानं भवति ततो मोक्ष इत्येषा शब्दाख्या (२)सिद्धिः। **अध्ययनाद्** वेदादिशास्त्राध्ययनात् पञ्चविंशतितत्त्वज्ञानं प्राप्यते मोक्षं याति इत्येषा तृतीया(३) सिद्धिः। **दुःखविघातत्रयम्**, आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयविघाताय गुरुं समुपगम्य तत उपदेशान्मोक्षं याति, एषा चतुर्थी सिद्धिः। एषैव दुःखत्रयभेदात् त्रिधा कल्पनीया इति षट् (४)सिद्धयः। **तथा सुहृत्प्राप्तिः**, यथा कश्चित् सुहृज्ज्ञानमधिगम्य मोक्षं गच्छति, एषा सप्तमी सिद्धिः(५)। **दानं यथा** कश्चिद्भगवतां प्रत्याश्रयौषधित्रिदण्डकुण्डिकादीनां ग्रासाच्छादनादीनां च दाने-

---

(१) ऊहस्तर्कः, आगमाविरोधिन्यायेनागमार्थपरीक्षणम्, परीक्षणं च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं यन्मननमाचक्षते आगमिन इति मिश्राः। अस्याश्च तन्मते तारतारमिति संज्ञैतन्मते तु तारमिति विशेषः (२) अध्ययनकार्यशब्दजन्यार्थज्ञानरूपेयं 'सुतारम्' इति मिश्रमतेपि व्यपदिश्यते इति न कश्चिद्विशेषः। (३) गुरुमुखात् अध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं 'तार'मिति संज्ञया व्यपदिष्टा मिश्रमते प्रथमा सिद्धिरियं बोद्धव्या। (४) एता मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयस्ता अपि हेतुहेतुमत्तया व्यवस्थिताः, तत्राध्ययनरूपा सिद्धिर्हेतुरेव मुख्यास्तु हेतुमत्य एव, मध्यमा ऊहशब्दसुहृत्प्राप्तिदानाख्या हेतुहेतुमत्य इति तत्त्वकौमुदी। (५) न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धत्ते न यावद्गुरुशिष्यब्रह्मचारिभिः सह संवाद्यतेऽतः सुहृदामुक्तसंवादकानां प्राप्तिः सुहृत्प्राप्तिश्चतुर्थी सिद्धिः रम्यकमिति मिश्रमतम्।

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥५२॥**

---

नोपकृत्य तेभ्यो ज्ञानमवाप्य मोक्षं याति, (१)एषाऽष्टमी सिद्धिः । आसामष्टानां सिद्धीनां शास्त्रान्तरे संज्ञाः कृताः-'तारं सुतारं तारतारं प्रमोदं प्रमुदितं प्रमोदमानं रम्यकं सदाप्रमुदितम्' इति । 'आसां विपर्ययाद् बुद्धेर्वधा ये विपरीतास्ते अशक्तौ निक्षिप्ताः—यथाऽतारमसुतारमतारतारमित्यादि द्रष्टव्यम् । (२)अशक्तिभेदा अष्टाविंशतिरुक्तास्ते सह बुद्धिवधैरेकादशेन्द्रियवधा इति । तत्र तुष्टिविपर्यया नव, सिद्धीनां विपर्यया अष्टौ, एवमेते सप्तदश बुद्धिवधाः, एतैः सहेन्द्रियवधा अष्टाविंशतिरशक्तिभेदाः पश्चात् कथिता इति विपर्ययाशक्तितुष्टिसिद्धीनामेवोद्देशो निर्देशश्च (३)कृत इति । किञ्चान्यत **सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः,** (४) सिद्धेः पूर्वा या विपर्ययाशक्तितुष्टयस्ता एव सिद्धेरङ्कुशस्तद्भेदादेव त्रिविधः, यथा हस्ती गृहीताङ्कुशेन वशो भवति, एवं विपर्ययाशक्तितुष्टिभिर्गृहीतो लोकोऽज्ञानमाप्नोति, तस्मादेताः परित्यज्य सिद्धिः सेव्या, सिद्धेस्तत्त्वज्ञानमुत्पद्यते तस्मान्मोक्ष इति ॥ ५१ ॥

अथ यदुक्तं **भावैरधिवासितं लिङ्गं,** तत्र भावा धर्मादयोऽष्टावुक्ता बुद्धिपरिणामाः, विपर्ययाशक्तितुष्टिसिद्धिपरिणताः, स भावाख्यः प्रत्ययसर्गो(५) लिङ्गश्च तन्मात्रसर्गश्चतुर्दशभूतपर्यन्त उक्तः, तत्रैकेनैव सर्गेण पुरुषार्थसिद्धौ किमुभयविधस-

---

(१) दैप् शोधन इत्यस्माद्धातोर्दानपदव्युत्पत्तेः, सदाप्रमुदितनाम्ना व्यपदिष्टेयं पञ्चमी सिद्धिमिश्रैः । (२) प्रदर्शिततुष्टिसिद्धिविपर्ययाशक्तिभेदसंख्यापूरकत्वं प्रदर्शयन्नष्टाविंशतिसंख्यां सङ्कलयति-अशक्तीति । (३) नाममात्रेण सङ्कीर्तनमुद्देशः, लक्षणपूर्वकं नामकीर्तनं च निर्देश इति । (४) अत्र समासेन चतुर्विधे बुद्धिसर्गे सिद्धिरुपादेया तन्निवारका विपर्ययाशक्तितुष्टयो हेया इत्याह-सिद्धेरिति । पूर्व इति विपर्ययादित्रयग्रहणम् । ताः सिद्धिकरिणीनामङ्कुशो निवारकत्वात्, अतः सिद्धिपरिपन्थित्वाद्विपर्ययाशक्तितुष्टयो हेया इति मिश्राः । तद्भेदादेव विपर्ययादिभेदादेव, अङ्कुशोऽपि त्रिविध इत्यर्थः । (५) विपर्ययाशक्तितुष्टिसिद्धिरूपेण परिणता धर्मादयोऽष्टौ भावा एव भावाख्यो बुद्धिसर्ग इत्यर्थः ।

**अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।**
**मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥ ५३॥**
**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः॥ ५४॥**

र्गश्चेत्यत आह—**भावैः** प्रत्ययसर्गैर्विना(१) लिङ्गं न तन्मात्रसर्गो न, पूर्वपूर्वसंस्कारादृष्टकारितत्वादुत्तरोत्तर(२)देहलम्भस्य, **लिंगेन** तन्मात्रसर्गेण च विना भा**वनिर्वृत्तिर्न** स्थूलसूक्ष्मदेहसाध्यत्वाद्धर्मादेः, (३) अनादित्वाच्च सर्गस्य बीजाङ्कुरवदन्योन्याश्रयो न दोषाय, तत्तज्जातीयापेक्षित्वेऽपि तत्तद्व्यक्तीनां परस्परानपेक्षित्वात्, **तस्माद्भावाख्यो लिङ्गाख्यश्च द्विविधः प्रवर्त्तते** सर्ग इति॥ ५२॥

किञ्चान्यत्—तत्र दैवमष्टप्रकारम्—ब्राह्मं प्राजापत्यं सौम्यमैन्द्रं गान्धर्वं याक्षं राक्षसं पैशाचमिति। पशुमृगपक्षिसरीसृपस्थावराणि भूतान्येवं पञ्चविधस्तैरश्चः। मानुषयोनिरेकैव(४)। इति चतुर्दश भूतानि॥ ५३॥

त्रिष्वपि लोकेषु गुणत्रयमस्ति, तत्र कस्मिन् किमधिकमित्युच्यते—(५) **ऊर्ध्वमिति।** अष्टसु देवस्थानेषु **सत्त्वविशालः** सत्त्वविस्तारः सत्त्वोत्कट ऊर्ध्वसत्त्व इति, तत्रापि रजस्तमसी स्तः। **तमोविशालो** मूलतः, पश्वादिषु स्थावरान्तेषु सर्वः सर्गस्तमसाधिक्येन व्याप्तः, (६)तत्रापि सत्त्वरजसी स्तः। मध्ये मानुषे

(१) धर्मादिसहितैर्भोगसाधनैरिन्द्रियान्तःकरणादिभिर्विना। (२) स्थूलसूक्ष्मशरीरप्राप्तेः। (३) ननु धर्मादयो भावाः शरीरापेक्षाः, शरीरं धर्माद्यपेक्षमित्यन्योन्याश्रयदोषादुभयस्याप्यसम्भव इत्यत आह-अनादित्वाच्चेति। सर्गप्रवाहस्यानादित्वादविच्छिन्नत्वात्, यथा बीजं प्रथममङ्कुरो वेत्यनिर्णयेऽपि नेतरेतराश्रयदोषस्तथा बुद्धेरनादितया तत्संयोगस्याप्यनादित्वेन संसारप्रवाहस्यानादितयोभयविधसर्गे नान्योन्याश्रयदोष इति भावः। अन्योन्याश्रयाभावे हेतुमाह-तत्तदिति। (४) ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षयैकत्वमिदं बोध्यम्, संस्थानस्य सर्वत्राविशेषादिति। इतीति। संक्षेपतोऽयं भौतिकः सर्ग उक्त इत्यर्थः। (५) भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिष्कर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेन, त्रैविध्यमाहोर्ध्वमिति मिश्राः। सत्त्वविशालशब्दस्य, पर्यायान्तरैरर्थमाह-सत्त्वविस्तार इत्यादिना। सत्त्वगुणप्रधानइतियावत्। अत एवाह-तत्रापीति। (६) तमोबहुलस्तमःप्रधान इत्यर्थः, अत एवाह-तत्रापीति।

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।**
**लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ॥ ५५ ॥**

---

रज उत्कटं, तत्रापि सत्त्वतमसी विद्येते, तस्माद् दुःखप्राया मनुष्याः। (१)एवं **ब्रह्मादिस्तम्बपर्यन्तः**, ब्रह्मादिस्थावरान्त इत्यर्थः। एवमभौतिकः सर्गो लिङ्गसर्गो भावसर्गो भूतसर्गो दैवमानुषतैर्यग्योना इति, एषः प्रधानकृतः षोडशविधः सर्गः(२) ॥ ५४ ॥

(३)**तत्रेति**। तेषु देवमानुषतिर्यग्योनिषु **जराकृतं मरणकृतं** चैव **दुःखं चेतनः** चैतन्यवान् **पुरुषः** प्राप्नोति, (४) न प्रधानं न बुद्धिर्नाहङ्कारो न तन्मात्राणीन्द्रियाणि महाभूतानि च। कियन्तं कालं पुरुषो दुःखं प्राप्नोतीति तद्विविनक्ति—**लिङ्गस्याविनिवृत्तेरिति**। यत् तन्महदादि लिङ्गशरीरेणाविश्य (५) तत्र व्यक्तीभवति, तद्यावन्न निवर्त्तते संसारशरीरमिति यावत्, संक्षेपेण त्रिषु स्थानेषु पुरुषो **जरामरणकृतं दुःखं प्राप्नोति**, लिङ्गस्याविनिवृत्तेः, लिङ्गस्य विनिवृत्तिं (६) यावत्, लिङ्गनिवृत्तौ मोक्षो मोक्षप्राप्तौ नास्ति दुःखमिति। तत् पुनः केन निवर्त्तते ? (७) यदा पञ्चविंशतितत्त्वज्ञानं स्यात् सत्त्वपुरुषान्यथाख्यातिलक्षणम्—

---

(१) भूर्लोको धर्माधर्मानुष्ठानपरत्वाद् दुःखबहुलत्वाच्च रजोगुणप्रधान इति मिश्राः। लोकस्थितिं संक्षिपति—एवमिति। (२) लिङ्गभावभेदेन द्विविधोऽभौतिकः, अष्टविधो दैवः, पञ्चविधस्तैर्यग्योनः, एकविधो मानुष्यक इति मिलित्वा चतुर्दशविधो भौतिकः सर्ग इत्येवं प्राधानिकः षोडशविध इत्यर्थः। (३) तदेवं सर्गं निरूप्य तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखहेतुतामाह—तत्रेति। (४) तस्माद् दुःखं स्वभावेन स्वत एव सर्गो दुःखरूपः विवेकिनामिति अत्र पूरणीयम्। दुःखादिप्राकृतगुणानां कथं चेतनसम्बन्धितेत्यत उक्तं पुरुष इति। पुरि लिङ्गे शेते इति पुरुषः, लिङ्गं च तत्संबन्धीति चेतनोपि तत्सम्बन्धी भवतीति मिश्राः। एवं च जडप्रकृत्यादिषु वर्तमानस्यापि दुःखस्योपलब्धिः पुरुष एव भवतीत्याशयेनाह—न प्रधानमित्यादिना। (५) स्थूलशरीर इत्यादिः। संसारशरीरं सूक्ष्मशरीरम्। (६) कुतः पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्येत्यत आह—लिङ्गस्याऽविनिवृत्तेः। पुरुषाद्भेदाग्रहाल्लिङ्गधर्मान् दुःखादीन् आत्मन्यध्यवस्यति पुरुष इति मिश्राः। (७) ज्ञानेन लिङ्गनिवृत्तेः प्रकारमाह—यदेति।

**इत्येष प्रकृतिकृतौ महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥**

---

इदं प्रधानमियं बुद्धिरयमहङ्कार इमानि पञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्च महाभूतानि येभ्योऽन्यः पुरुषो विसदृश इत्येवं ज्ञानाल्लिङ्गनिवृत्तिस्ततो मोक्ष इति ॥५५॥

प्रकृतेः किंनिमित्तमारम्भ इत्युच्यते—(१) इत्येष परिसमाप्तौ निर्देशे च, प्रकृतिकृतौ (२) प्रकृतिकरणे प्रकृतिक्रियायां य **आरम्भो महदादिविशेषभूतपर्यन्तः**, प्रकृतेर्महान् महतोऽहङ्कारस्तस्मात् तन्मात्राण्येकादशेन्द्रियाणि तन्मात्रेभ्यः पञ्चमहाभूतानीत्येव **प्रतिपुरुषविमोक्षार्थं** पुरुषं पुरुषं प्रति देवमनुष्यतिर्यग्भावं गतानां (३) विमोक्षार्थमारम्भः कथम्? **स्वार्थ इव परार्थ आरम्भः**, यथा कश्चित् स्वार्थं त्यक्त्वा मित्रकार्याणि करोति एवं प्रधानम्, पुरुषोऽत्र प्रधानस्य न किञ्चित् प्रत्युपकारं करोति, स्वार्थ (४) इव न च स्वार्थः परार्थ एव, अर्थः शब्दादिविषयोपलब्धिर्गुणपुरुषान्तरोपलब्धिश्च, त्रिषु लोकेषु शब्दादिविषयैः पुरुषा योजयितव्याः अन्ते च मोक्षेणेति प्रधानस्य प्रवृत्तिः, तथा चोक्तम्—'कुम्भवत् प्रधानं पुरुषार्थं कृत्वा निवर्तते' इति ॥ ५६ ॥

---

(१) उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति इत्येष इति मिश्राः । सर्गस्य प्रकृतिमात्रारब्धत्वं वक्तुमुपसंहरति इत्येष इति नारायणतीर्थः । (२) प्रकृतिक्रियायां प्रधानव्यापारे य आरम्भो महदादिरूप इत्यनेन ब्रह्मादृष्टादिव्यापारत्वं तस्य निरस्तम् । अत्र प्रकृतिकृत इति प्रथमान्तपाठस्य मिश्रादिसंमतत्वेऽपि एतन्मते सप्तम्यन्तस्यैव पाठस्य व्याख्यानात्स एवात्र मुद्रितः । (३) मध्ये प्रत्येकं चेतनपुरुषस्य विमोक्षार्थमित्यनुषज्यान्वयः । (४) स्वार्थ इव न च प्रकृतेः कश्चित्स्वार्थः, तस्या जडतया स्वार्थाभावात्, एवं च स्वार्थ इवेति दृष्टान्तः, तथा च यथा चेतना कान्ता 'अहं पुरुषेण भोग्या भवामीति' स्वकर्मकभोगरूपे स्वार्थे प्रवर्तते तथा नेयं, किन्तु प्रतिपुरुषविमोक्षार्थं परार्थ एव प्रवर्तते प्रकृतिः, तथा च प्रथमं भोगं प्रदाय पश्चात् परार्थं मोक्षमपि दास्यतीति भोगार्थमपवगार्थं चास्याः परार्थ एव आरम्भ इत्यर्थः । एतदभिप्रायेणैवाह अर्थ इत्यादिना ।

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**
**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥**
**(१)रङ्गस्य दर्शयित्वा विनिवर्तते नर्तकी यथा नृत्यात् ।**
**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥५९॥**

---

( २ ) 'अत्रोच्यतेऽचेतनं प्रधानं चेतनः पुरुष इति, मया त्रिषु लोकेषु शब्दादिभिर्विषयैः पुरुषो योज्योऽन्ते मोक्षः कर्त्तव्य इति कथं चेतनवत् प्रवृत्तिः ?' सत्यं, किन्त्वचेतनानामपि प्रवृत्तिर्दृष्टा निवृत्तिश्च यस्मादित्याह—यथा तृणोदकं गवा भक्षितं क्षीरभावेन परिणम्य वत्सविवृद्धिं करोति, पुष्टे च वत्से निवर्त्तते, एवं पुरुषविमोक्षनिमित्तं प्रधानम् इति अज्ञस्य प्रवृत्तिरिति ॥ ५७ ॥

( ३ ) किञ्च—यथा लोके इष्टौत्सुक्ये सति तस्य निवृत्त्यर्थं क्रियासु प्रवर्त्तते गमनागमनक्रियासु कृतकार्यो निवर्त्तते ( ४ ), **तथा पुरुषस्य विमोक्षार्थं** शब्दा-

---

( १ ) ननु भवतु प्रकृतेः प्रवृत्तिर्निवृत्तिस्तु कथम् ? तथा च पुरुषस्यानिर्मोक्ष एव स्यादत आह-रङ्गस्येति । ( २ ) आक्षिपति अत्रोच्यत इत्यादिना । अचेतनायाः कथं प्रवृत्तिरित्याक्षेपाशयः । समाधत्ते सत्यमित्यादिना । क्षीरादीनामचेतनानामपि प्रवृत्तिदर्शनादचेतनप्रकृतेः प्रवृत्त्यङ्गीकारे न कश्चिद्दोष इति समाधानाभिप्रायः । ननु क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनतया प्रवृत्तेश्चेतननियतत्वमव्याहतमेवेति दृष्टान्तासिद्धिरिति चेन्न । सांख्यमते ईश्वरसत्त्वे प्रमाणाभावात् , तत्सत्त्वेप्याप्तकामस्येशस्य प्रयोजनं विना प्रवर्तकत्वायोगात् । न च कारुण्यादिति वाच्यम् । सर्गात्प्राक् जीवानां दुःखित्वासम्भवेन तन्निवृत्तीच्छारूपकारुण्यस्यापि तत्रासम्भवात्तस्मात्स्वयमज्ञापि परप्रयोजनेनैव क्षीरादिवत् प्रवर्तते प्रकृतिरिति सुस्थिरम् । ( ३ ) ननु प्रयोजनोद्देशेनैव प्रवृत्तिर्दृष्टा न चास्यास्तदस्तीत्यत्राह औत्सुक्येति । स्वार्थ इवेति यद्दृष्टान्तितं तद्विभजते इति मिश्राः । ( ४ ) औत्सुक्यमिच्छाविशेषस्स चेष्यमाणप्राप्तौ निवर्तते, इष्यमाणश्च स्वार्थः, इष्टलक्षणत्वात्फलस्येति भावः ।

**नानाविधैरुपायैरुपकारिण्यमुपकारिणः पुंसः।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥**
**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

---

दिविषयोपभोगोपलब्धिलक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं च द्विविधमपि पुरुषार्थं कृत्वा प्रधानं निवर्त्तते ॥ ५८ ॥

किञ्चान्यत्—यथा नर्त्तकी शृङ्गारादिरसै रतिहासादिभावैश्च निबद्धगीतवादित्रनृत्यानि **रङ्गस्य(१)दर्शयित्वा** कृतकार्या नृत्यान्निवर्त्तते, तथा **प्रकृतिरपि पुरुषस्यात्मानं प्रकाश्य** (२) बुद्ध्यहङ्कारतन्मात्रेन्द्रियमहाभूतभेदेन, निवर्त्तते ॥

कथं को वाऽस्या निवर्त्तको हेतुः। तदाह—(३) **नानाविधैरुपायैः** प्रकृतिः **पुरुषस्योपकारिण्यनुपकारिणः पुंसः**। कथम्? देवमानुषतिर्यग्भावेन सुखदुःखमोहात्मकभावेन शब्दादिविषयभावेन, एवं नानाविधैरुपायैरात्मानं प्रकाश्याहमन्या त्वमन्य इति निवर्त्तते, अतो नित्यस्य तस्यार्थमपार्थकं चरति कुरुते, (४) यथा कश्चित् परोपकारी सर्वस्योपकुरुते नात्मनः प्रत्युपकारमीहते, एवं प्रकृतिः पुरुषार्थं **चरति** करोत्य**पार्थकम्**। पश्चादुक्तमात्मानं प्रकाश्य निवर्त्तते ॥ ६० ॥

निवृत्ता च किं करोतीत्याह—(५) लोके प्रकृतेः सुकुमारतरं (६) न किञ्चिद-

---

(१) मञ्चाः क्रोशन्तीतिवत् स्थानिलक्षणया सभ्यादेरित्यर्थः। (२) केन रूपेण प्रकाशयति प्रकृतिरित्यत आह बुद्धीति। इदमुपलक्षणम्—पुरुषाद्भेदेन च प्रकाश्य निवर्तत इति। (३) ननु परार्थं प्रत्युपकारसम्बन्धेन प्रवृत्तिर्दृश्यते, नहि पुरुषात्कश्चित्प्रत्युपकारः प्रकृतेरत आह नानाविधैरित्यन्ये। (४) यथा गुणवानप्युपकार्यपि भृत्यो निर्गुणेऽत एवानुपकारिणि स्वामिनि निष्फलाराधनः एवमियम्प्रकृतिरपि तपस्विनी गुणवत्युपकारिणि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति मिश्राः। (५) स्यादेतत् नर्तकी नृत्यं सभ्येभ्यो दर्शयित्वा धनप्राप्त्या निवृत्तापि पुनः कुतूहलात् यथा प्रवर्तते तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा विवेकेन निवृत्तापि पुनः प्रवर्त्स्यते इत्यत आह प्रकृतेरिति मिश्रादयः। (६) सुखदुःखमोहात्मकसुभोग्यविषयम् अन्यत् ईश्वरस्वभावकालादि लोके नास्तीत्यर्थः। तत्र हेतुमाह येनेति।

स्तीत्येवं मे मतिर्भवति, येन परार्थ एवं मतिरुत्पन्ना, कस्मात् ? अहमनेन पुरुषेण दृष्टास्मीत्यस्य पुंसः पुनर्दर्शनं नोपैति, पुरुषस्यादर्शनमुपयातीत्यर्थः। (१) तत्र सुकुमारतरं वर्णयति। केचिदीश्वरं कारणं ब्रुवते—

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा॥

(२) अपरे स्वभावकारणिका ब्रुवते—

'केन शुक्लीकृता हंसा मयूराः केन चित्रिताः। स्वभावेनैव—' इति।

(३) अत्र सांख्याचार्या आहुः—निर्गुणत्वादीश्वरस्य कथं सगुणतः प्रजा जायेरन् ? कथं वा पुरुषान्निर्गुणादेव, तस्मात् प्रकृतेर्युज्यते, यथा शुक्लेभ्यस्तन्तुभ्यः शुक्ल एव पटो भवति, कृष्णेभ्यः कृष्ण एव—इति, एवं त्रिगुणात् प्रधानात् त्रयो लोकास्त्रिगुणाः समुत्पन्ना इति गम्यते, (४) निर्गुण ईश्वरः, सगुणानां लोकानां तस्मादुत्पत्तिरयुक्तेति। अनेन पुरुषो व्याख्यातः। (५) तथा केषाञ्चित् कालः कारणमिति, उक्तं च—

कालः पचति भूतानि कालः संहरते जगत्।

---

प्रकृतेः परार्थमतौ हेतुं प्रश्नपूर्वकमाहाहमनेनेति। (१) प्रकृतावेवोक्तविधं सुकुमारतरत्वं प्रदर्शयितुमन्यत्र तन्निषेधार्थं मतान्तराणि निरूपयतीत्यर्थः। अज्ञ इति। स्वसुखदुःखभोगयोरसमर्थोऽयं जीव ईश्वरप्रेरणयैव स्वर्गनरकसुखदुःखादि भुङ्क्तेऽत ईश्वरः कारणमितीश्वरकारणतामाह एकः। (२) निषेध्यं मतान्तरमाह अपर इति। हंसादीनां स्वभावतः शुक्लानां शुक्लत्वं स्वभावतश्चित्राणां मयूराणां चित्रत्वं च स्वभावेनैवातः स्वभावत एवास्य जगत उत्पत्तिरिति स्वभावकारणतावादोऽपरः। (३) मतद्वयं निषेद्धुं सांख्याचार्यमतमाहात्रेति। सगुणतः—सुखदुःखादिगुणवत्यः। ईश्वरकारणतावादं निरस्य जीवकारणतावादमपि प्रसङ्गान्निरस्यति कथं वेति। निर्गुणाज्जीवात्कथं सगुणं कार्यजातमुत्पद्येतेत्यर्थः। प्रकृतिकारणतावादमुपसंहरति तस्मादिति। सगुणकारणात्सगुणकार्योत्पत्तौ दृष्टान्तप्रदर्शनेन प्रकृतिकारणतावादं द्रढयति यथेति। (४) प्रकृतिकारणतावादं संस्थाप्येश्वरात्मकारणतावादनिराकरणमुपसंहरति निर्गुण इति। (५) कैश्चिदङ्गीकृते जगद्धेतौ कालेऽपि प्रकृतिवत्सुकुमारतरत्वं न सम्भवतीति प्रदर्शयितुं कालकारणतावादिमतं निरूपयति तथेति। स्वभाववत् काल

**तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥ ६२॥**

---

कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः॥

व्यक्ताव्यक्तपुरुषास्त्रयः पदार्थाः, तेन कालोऽन्तर्भूतोऽस्ति, स हि व्यक्तः सर्वकर्त्तृत्वात्, कालस्यापि प्रधानमेव कारणं स्वभावोऽप्यत्रैव लीनः, तस्मात् कालो न कारणम् नापि स्वभाव इति। (१)तस्मात् प्रकृतिरेव कारणं, न प्रकृतेः कारणान्तरमस्तीति, न पुनर्दर्शनमुपयाति पुरुषस्य, अतः प्रकृतेः सुकुमारतरं सुभोग्यतरं न किञ्चिदीश्वरादि कारणमस्तीति मे मतिर्भवति। तथा च लोके रूढम्॥ ६१॥

'पुरुषो मुक्तः पुरुषः संसारी' इति नोदिते आह (२)—**तस्मात् कारणात् पुरुषो न बध्यते नापि मुच्यते नापि संसरति,** यस्मात् कारणात् प्रकृतिरेव नानाश्रया दैवमानुषतिर्यग्योन्याश्रया बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतस्वरूपेण बध्यते मुच्यते संसरति चेति। '(३)अथ मुक्त एव स्वभावात् स सर्वगतश्च कथं संसरति?' अप्राप्तप्रापणार्थं संसरणमिति, तेन पुरुषो बध्यते पुरुषो मुच्यते पुरुषः संसरतीति व्यपदिश्यते येन संसारित्वं विद्यते, सत्त्वपुरुषान्तरज्ञानात् तत्त्वं पुरुषस्याभिव्यज्यते, तदभिव्यक्तौ केवलः शुद्धः मुक्तः स्वरूपप्रतिष्ठः पुरुष इति। (४)'अत्र यदि पुरुषस्य बन्धो नास्ति ततो मोक्षोऽपि नास्ति'। अत्रोच्यते—

---

स्यापि व्यक्ततया तद्धेतुप्रधानकारणतावादेनैव तयोः कारणत्वं निरस्तमिति भावः। तेन-तत्र, कथमन्तर्भाव इत्याह स हीति। (१) प्रकृतिहेतुतावादमुपसंहरति तस्मादिति। (२) ननु पुरुषश्चेदगुणोऽपरिणामी कथमस्य सुखदुःखादिरूपो बन्धः, अतो न मोक्षोऽपि तस्य बन्धेन सामानाधिकरण्यात् तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वचः, इतीमामाशङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति तस्मादित्यन्ये। (३) यदि स्वभावतो मुक्त एव पुरुषस्तदा सर्वगतस्य तस्य कथं संसार इत्याशयेनाक्षिपति अथेति। समाधत्ते अप्राप्तेति। निःसङ्गत्वेन अप्राप्तस्य शब्दाद्युपभोगस्य प्राप्तये बुध्यादिभेदाग्रहात् तद्गतसंसरणमात्मनि प्रतीयते, भेदप्रतीतौ च पुरुषगतनिःसङ्गत्वादिप्रतीत्या स स्वतो न बद्धो न मुक्त इत्यादिपुरुषस्वरूपाभिव्यक्त्या स्वरूपप्रतिष्ठालाभ इति समाधानार्थः।

(४) पुनः शङ्कते अत्रेति। यदि न पुरुषस्य बन्धः संसारापरपर्यायस्तदाऽऽ-

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥**

---

प्रकृतिरेवात्मानं बध्नाति मोचयति च, यत्र सूक्ष्मशरीरं तन्मात्रकं त्रिविधकरणोपेतं त्रिविधेन बन्धेन बध्यते, उक्तञ्च—

प्राकृतेन च बन्धेन तथा वैकारिकेण च ।
दाक्षिणेन तृतीयेन बद्धो नान्येन मुच्यते ।

तत् सूक्ष्मं शरीरं धर्माधर्मसंयुक्तम् ॥ ६२ ॥

'प्रकृतिश्च बध्यते प्रकृतिश्च मुच्यते संसरतीति (१)कथम्' तदुच्यते—**रूपैः सप्तभिरेव,** एतानि सप्त प्रोच्यन्ते—धर्मो वैराग्यमैश्वर्यमधर्मोऽज्ञानमवैराग्यमनैश्वर्यम्, एतानि प्रकृतेः सप्त रूपाणि, तैरात्मानं स्वं बध्नाति प्रकृतिः, आत्मनः स्वेनैव सैव प्रकृतिः, पुरुषस्यार्थः पुरुषार्थः (२) कर्त्तव्य इति विमोचयत्यात्मानमेकरूपेण ज्ञानेन ॥ ६३ ॥

---

त्मा मुक्त इति व्यवहारः कथं स्यात्, मुचेर्बन्धनविश्लेषार्थत्वादिति शङ्काकर्तुरभिप्रायः । समाधत्ते अत्रोच्यते इति । असङ्गोऽप्यात्मा प्रकृतिसंसर्गादेवाभेदाग्रहमूलकं बन्धमात्मन्यारोपयति मुक्तिं च, यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते तदाश्रयेण भृत्यानां तद्भागित्वात्तत्फलस्य च शोकलाभादेः स्वामिनि सम्भवात्, तथा च प्रकृतिगतयोरपि भोगापवर्गयोर्विवेकाग्रहात्पुरुषसम्बन्धसम्भवात् मुक्त आत्मेत्यादिव्यवहारोपपत्तिरिति समाधानार्थः । प्रकृतिसङ्गात् कुत्रात्माऽऽत्मानं बध्नाति मोचयति चेत्यत्राह यत्रेति । योनिविशेषे इत्यर्थः, त्रिविधकरणोपेतं—महदाद्याभ्यन्तरत्रिविधकरणसहितम्, तत् धर्माधर्मसंयुतं सूक्ष्मशरीरम्, बध्यते तत्र प्रकृत्यादिसंगादात्मनि बन्धादिव्यवहार इत्यभिप्रायः। त्रिविधबन्धमाह प्राकृतेनेति । (१) किंसाधनाः प्रकृतिगता बन्धसंसारापवर्गा इति प्रश्नार्थः । (२) भोगापवर्गरूपः । एकरूपेणेति । तथा च भोगरूपपुरुषार्थं प्रति धर्मादिसप्तविधरूपैरात्मानं बध्नाति, स्वरूपावस्थानरूपापवर्गं प्रति चैकेन केवलेन ज्ञानरूपभावेनैवात्मानं संसारान्मोचयतीति भावः । एतेन वैराग्याद्यभावेऽपि ज्ञानस्य मुक्तिहेतुत्वमिति सूचितम्, विषयजिहासारूपवैराग्यस्य विषयदोषदर्शनजन्यस्य भोगेष्वदीनतामात्रम्, तथा धीनिरोधरूपोपरमस्य च यमादिसाध्यस्य द्वैतादर्शनमात्रं फलं

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥**
**तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥**

---

'कथं तज्ज्ञानमुत्पद्यते ?'—एवमुक्तेन क्रमेण पञ्चविंशतितत्त्वालोचनाभ्यासादियं प्रकृतिरयं पुरुष एतानि पञ्चतन्मात्रेन्द्रियमहाभूतानीति पुरुषस्य ज्ञानमुत्पद्यते, नास्मि नाहमेव भवामि, (१) न मे मम शरीरं तत्, यतोऽहमन्यः शरीरमन्यत्, (२) नाहमिति अपरिशेषम्, अहङ्काररहितम्, अविपर्ययाद्विशुद्धं (३), विपर्ययः संशयोऽविपर्ययादसंशयाद्विशुद्धं केवलं (४) तदेव नान्यदस्तीति मोक्षकारणमुत्पद्यतेऽभिव्यज्यते ज्ञानं पञ्चविंशतितत्त्वज्ञानं पुरुषस्येति ॥ ६४ ॥

'ज्ञाने पुरुषः किं करोति ?'—(५) तेन विशुद्धेन केवलज्ञानेन पुरुषः **प्रकृतिं पश्यति प्रेक्षकवत्** प्रेक्षकेण तुल्यमवस्थितः (६) **स्वस्थः**, यथा रङ्गप्रेक्षकोऽवस्थितो नर्त्तकीं पश्यति, स्वस्थः स्वस्मिंस्तिष्ठति स्वस्थः स्वस्थानस्थितः। कथं-

---

न मोक्षः 'तमेव विदित्वे' त्यादिश्रुतिषु तस्य ज्ञानैकलभ्यत्ववर्णनादिति तात्पर्यम् ।
(१) कर्तृत्वादिविशिष्टं बुध्यादिकमहं न भवामीत्यर्थः, अनेनात्मनि आपरोपितं कर्तृत्वं विशुद्धज्ञानोत्पत्तौ निवर्तते इति सूचितम् । कर्तृत्वाभावे च स्वामित्वमपि निवर्तत इत्याशयेनाह न मे इति । कर्ता हि स्वामित्वं लभेत, तस्मात्स्वाभाविकी स्वामिता कुत इति मिश्राः । अभेदज्ञानपर्यन्तं मे मम शरीरमिति ग्रहात्स्वामित्व प्रतीतिर्भेदज्ञाने सा निवर्तत इति गौडपादाशयः । (२) आत्मनि अध्यवसायादिसर्वव्यापारनिषेधाच्च कर्तृत्वाभाव इत्याह नाहमिति मिश्राः । अहङ्कारभेदग्रहविशिष्टमिति गौडपादाभिप्रायः । अपरिशेषम् चरमम् इत्यन्ये । (३) संशयविपर्ययौ ज्ञानस्याविशुद्धी तद्रहितं विशुद्धमिति मिश्राः । व्यधिकरणप्रकाराभावाद्विशुद्धम् प्रमात्मकं मिथ्याज्ञानवासनोन्मूलनक्षममिति चंद्रिकाकारः । (४) पुरुषमात्रगोचरमिति नारायणतीर्थाः । विपर्ययासंभिन्नमिति वाचस्पतिमिश्राः । (५) किम्पुनरीदृशेन साक्षात्कारेण सिध्यतीत्याह तेनेति मिश्राः । (६) अवस्थितो निष्क्रियः । स्वस्थ इत्यत्र स्वच्छ इति पाठो मिश्रमते, तस्य च रजस्तमोकलु-

(१) दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥६६॥

---

भूतां प्रकृतिम् ? **निवृत्तप्रसवां** निवृत्तबुद्धयहङ्कारकार्याम् (२) **अर्थवशात् सप्तमरूपविनिवृत्तां,** निवर्तितपुरुषोभयप्रयोजनवशाद् यैः सप्तभी रूपैर्धर्मादिभिरात्मानं बध्नाति तेभ्यः सप्तभ्यो रूपेभ्यो विनिवृत्तां प्रकृतिं पश्यति ॥ ६५ ॥

किञ्च—रङ्गस्थ इति (३) यथा रङ्गस्थ इत्येवमुपेक्षक एकः केवलः शुद्धः पुरुषः, तेनाहं दृष्टेति कृत्वा उपरता निवृत्ता, एका एकैव प्रकृतिः त्रैलोक्यस्यापि प्रधानकारणभूता न द्वितीया प्रकृतिरस्ति मूर्त्तिवधे जातिभेदात्, (४) एवं प्रकृतिपुरुषयोर्निवृत्तावपि व्यापकत्वात् संयोगोऽस्ति न तु संयोगात् कृतः सर्गो भवति, **सति संयोगेऽपि तयोः** प्रकृतिपुरुषयोः सर्वगतत्वात् सत्यपि संयोगे **प्रयोजनं नास्ति सर्गस्य** सृष्टेः चरितार्थत्वात्, (५) प्रकृतेर्द्विविधं प्रयोजनं शब्दविषयोपलब्धिर्गुणपुरुषान्तरोपलब्धिश्च, उभयत्रापि चरितार्थत्वात् सर्गस्य नास्ति प्रयोजनं यः पुनः सर्ग इति, (६) यथा दानग्रहणनिमित्तं उत्तमर्णाधमर्णयोर्द्रव्यविशुद्धौ सत्यपि संयोगे न कश्चिदर्थसम्बन्धो भवति, एवं प्रकृतिपुरुषयोरपि नास्ति प्रयोजनमिति ॥६६॥

---

षया बुद्ध्याऽसम्भिन्न इत्यर्थस्तन्मते बोध्यः । (१) ननु नित्ययोः प्रकृतिपुरुषयोः संयोगस्य विद्यमानत्वात् कथं तस्याः प्रसवनिवृत्तिस्तत्राह दृष्टेति । (२) अहङ्कारकार्याणि भोगभेदसाक्षात्कारादयो निवृत्ता यस्यास्ताम्, भोगविवेकसाक्षात्कारौ हि प्रकृत्या प्रसोतव्यौ तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिरिति भावः। (३) रङ्गस्थ इति पदं स्वयं व्याचष्टे यथेति । यथा रङ्गभूमिस्थः सभ्यः नर्तकीं दृष्ट्वा तद्दर्शनादुपरमते तथैकः पुरुषः स्वभिन्नेयं स्वसम्पर्काद्बध्नातीत्येवंगुणा प्रकृतिर्मया दृष्टेत्युपेक्षको भवति, तद्भोगाद्यावेशरहितो भवतीत्यर्थः। एवं प्रथमपादं व्याख्याय द्वितीयं व्याचष्टे तेनाहमिति । गौडपादमते 'दृष्टाहमित्युपरमत्येकेति' पाठोऽत्र द्रष्टव्यः, अत एवाह एकेति । न द्वितीयेत्यत्र हेतुमाह मूर्तिवध इति । प्रकृतेर्जात्या भेदस्वीकारे मूर्तिनाशस्य हेतुत्वात्तस्य च परिणामवादेऽसम्भवात् इति भावः। (४) उत्तरार्धमवतारयति एवमिति । सति संयोगेपीत्यस्यार्थमाह तयोरिति । (५) सृष्टिचरितार्थत्वं विवृणोति प्रकृतेरिति । (६) पुनः प्रकृतिपुरुषयोः सृष्टिप्रयोजकसंसर्गाभावे दृष्टान्तमाह यथेति ।

**सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ॥ ६७ ॥**
**प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

---

'यदि पुरुषस्योत्पन्ने ज्ञाने मोक्षो भवति ततो मम कस्मान्न भवती' त्यत उच्यते (१) यद्यपि पञ्चविंशतितत्त्वज्ञानं भवति तथापि संस्कारवशाद्धृतशरीरो योगी तिष्ठति, कथम् ? **चक्रभ्रमवच्च**क्रभ्रमेण तुल्यम्, यथा कुलालश्चक्रं भ्रामयित्वा **घटं** करोति, मृत्पिण्डं चक्रमारोप्य पुनः कृत्वा घटं पर्यामुञ्चति चक्रं भ्रमत्येव संस्कार-वशात्, एवं **सम्यग्ज्ञानाधिगमा**दुत्पन्नसम्यग्ज्ञानस्य **धर्मादीनामकारणप्राप्तौ** एतानि सप्त रूपाणि बन्धनभूतानि सम्यग्ज्ञानेन दग्धानि, यथा नाग्निना दग्धानि बीजानि प्ररोहणसमर्थानि, एवमेतानि धर्मादीनि बन्धनानि न समर्थानि । (२) धर्मादीनामकारणप्राप्तौ संस्कारवशाद्धृतशरीरस्तिष्ठति, (३) ज्ञानाद्वर्त्तमानधर्माध-र्मक्षयः कस्मान्न भवति' वर्त्तमानत्वादेव, क्षणान्तरे क्षयमप्येति, ज्ञानं त्वनागतं कर्म दहति, वर्त्तमानशरीरेण च यत् करोति तदपीति, विहितानुष्ठानकरणादिति, संस्कारक्षयाच्छरीरपाते मोक्षः ॥ ६७ ॥

स किंविशिष्टो भवतीत्युच्यते—धर्माधर्मजनितसंस्कारक्षयात् (४) **प्राप्ते शरीरभेदे** (५) **चरितार्थ**त्वात् **प्रधानस्य निवृत्तौ ऐकान्तिक**मवश्य**मात्य-**

---

(१) ननु 'भिद्यते हृदयग्रन्थिरि' त्यादिश्रुत्या तत्त्वज्ञानानन्तरमेव मुक्तौ सर्व-कर्मक्षयेण देहाद्यभावसूचनात् कथं प्रकृतिदर्शनम् । ज्ञाने देहस्य कारणत्वात्तत्राह सम्य-गित्यपरे । ज्ञानस्य मोक्षे हेतुत्वप्रतिपादनज्ज्ञानवतो मे मोक्षः कथं नेति गौडपा-दावतरणाशयः । ( २ ) उपसंहरति धर्मादीनामिति । ( ३ ) ननु ज्ञानेनातीतानागत-धर्माधर्मकर्मसञ्चयविनाशवत् वर्तमानधर्माधर्मक्षयः कुतो न, येन ज्ञानानन्तरं शरीर-पातेऽपवर्ग एव भवेत्कथं धृतशरीरतेत्याशयेनाक्षिप्य समाधत्ते ज्ञानादित्यादिना । क्षणान्तरे–प्रारब्धभोगानन्तरम्, अत एवाहुः 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैर-पी'ति । ( ४ ) ननु यद्युत्पन्नतत्त्वज्ञानोऽपि तिष्ठति कदा तर्हि मोक्षं गच्छति तत्राह प्राप्त इति अन्ये । ( ५ ) भोगेन प्रारब्धक्षयतः शरीरस्य विनाशे प्राप्ते,

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः ।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

इति सांख्यकारिका समाप्ता ।



न्तिकमनन्तर्हितं **कैवल्यं** केवलभावान्मोक्षम् , **उभयमै**कान्तिकात्यन्तिकमित्येवं विशिष्टं कैवल्यमाप्नोति ॥ ६८ ॥

(१) **पुरुषार्थो** मोक्षस्तदर्थं **ज्ञानमिदं गुह्यं** रहस्यं **परमर्षिणा** श्रीकपिलर्षिणा **समाख्यातं** सम्यगुक्तम् । **यत्र** ज्ञाने (२) **भूतानां** वैकारिकाणां **स्थित्युत्पत्तिप्रलया** अवस्थानाविर्भावतिरोभावाश्चि**न्त्यन्ते** विचार्यन्ते, येषां विचारात् सम्यक् पञ्चविंशतितत्त्वविवेचनात्मिका सम्पद्यते (३) संवित्तिरिति ॥ ६९–७२ ॥

सांख्यं कपिलमुनिना प्रोक्तं संसारविमुक्तिकारणं हि ।
यत्रैताः सप्ततिरार्या भाष्यं चात्र गौडपादकृतम् ॥

इति सांख्यकारिकाव्याख्या समाप्ता ।



चरितार्थत्वात् बुद्धितत्त्वादिद्वारा कृतभोगापवर्गलक्षणप्रयोजनत्वात् प्रधानस्य पुरुषं प्रति विनिवृत्तौ संयोगाभावलक्षणलयेऽवश्यंभावि पुनर्दुःखजातीयानुत्पत्तिविशिष्टं चोभयविधं कैवल्यं मोक्षं प्राप्नोति पुरुष इत्यर्थः । ( १ ) प्रेक्षावद्विश्वासार्थं परमर्षिपूर्वकत्वमस्य शास्त्रस्याह पुरुषार्थ इति । ( २ ) यज्ज्ञानार्थम् , यथा चर्मणि द्वीपिनं हन्तीति मिश्राः । ( ३ ) अनुभवः प्रकृतिपुरुषविवेकसाक्षात्कारात्मकः ।



* श्रीगणेशाय नमः *

# सांख्यकारिका : भाषानुवाद

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
प्रकृति-पुरुषको नमन करि ध्याइ तथा गुरुपाद ।
सांख्यकारिकाका करूं हिन्दीमें अनुवाद ॥

साक्षाद् ब्रह्माजीके पुत्र भगवदवतार कपिल महामुनिने अवतार लेकर सारे संसारके जीवोंको अज्ञानरूप अन्धकारमें डूबा हुआ देखकर उनपर दया करते हुए पचीस तत्त्वोंके ज्ञानसे भरे हुए जिस सांख्यशास्त्र का अपने प्रधान शिष्य आसुरि मुनिको उपदेश किया था, आचार्य-परम्परासे प्राप्त उसी सांख्यशास्त्र का सार ईश्वरकृष्ण नामके महर्षिने सत्तर कारिकाओंमें संग्रह कर शिष्योंको इस तरह पढ़ाया कि हे शिष्यो ! इस संसारमें प्राणिमात्रको*आध्यात्मिक, आधिभौतिक तथा आधिदैविक तीनों प्रकारके दुःखोंका प्रतिकूल होनेके कारण असह्य सम्बन्ध होनेसे प्रकृतिपुरुष-विवेकद्वारा उक्त दुःखोंके नाशक सांख्यशास्त्र ज्ञान रूप उपायकी जिज्ञासा ( जाननेकी इच्छा ) बुद्धिमान पुरुषोंको होती है ।

**शिष्यों का प्रश्न**—पूर्वोक्त दुःखत्रयका उच्छेद रसायनादि औषध-सेवन-रूप दृष्ट ( लौकिक ) उपायोंसे हो सकता है इसलिए शास्त्रज्ञानरूप अलौकिक उपायमें जिज्ञासा व्यर्थ है ?

---

*शरीर तथा मनमें जो दुःख होते हैं वे दो प्रकारके (शारीरिक तथा मानसिक) आध्यात्मिक दुःख कहलाते हैं, १ इनमेंसे वातपित्तकफादिकोंके वैषम्यसे जो ज्वरादि होते हैं, ये शारीरिक दुःख कहलाते हैं, तथा २ काम, क्रोध, लोभ, मोह, भय, ईर्ष्या तथा अभीष्ट विषयों की अप्राप्तिसे होनेवाले दुःख मानसिक कहे जाते हैं। आधि-भौतिक दुःख वे हैं जो शेर, चोर इत्यादि भौतिक प्राणियोंसे पैदा होते हैं। इसी तरह अग्नि-वायु इत्यादि देवताओंसे होनेवाली दाहादि व्याधियोंको आधिदैविक कहते हैं, और भूत, प्रेत, पिशाचादि बाधाओंको भी आधिदैविक दुःख ही कहते हैं ।

**उत्तर**—दृष्टोपायोंसे दुःखोच्छेद अवश्य होता ही है यह नियम न होनेसे तथा होनेपर भी फिर दुःख पैदा होते हैं, इस कारण ऐकान्तिक तथा आत्यन्तिक दुःखोच्छेद दृष्ट उपायोंसे नहीं हो सकता, और सांख्यशास्त्रके ज्ञानसे उत्पन्न तत्त्वज्ञान रूप अलौकिक उपायसे ऐकान्तिक तथा आत्यन्तिक दुःखका उच्छेद हो सकता है अतः सांख्यशास्त्रमें मुमुक्षु पुरुषोंको जिज्ञासा होना युक्त है ॥ १ ॥

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥**

इसी तरह सुख विशेष रूप स्वर्गादि फलोंको देनेवाले ज्योतिष्टोमयागादिरूप वेदोक्त कर्म भी, पशुहिंसादिकोंसे भरे होने के कारण अशुद्ध[1], तथा कालान्तरमें फलके विनाशी होनेसे[2] क्षयी, एवं उक्त कर्मोंके फलोंमें न्यूनाधिक भाव होनेसे ईर्ष्यादिक हो सकते हैं। इसलिये अतिशय[3], ऐसे तीन दोष होनेसे, पूर्वोक्त दृष्ट उपायों के समान ही हैं, क्योंकि उनसे भी ऐकान्तिक तथा आत्यन्तिक दुःखोच्छेद नहीं हो सकता, इसलिये प्रत्यक्ष तथा वेदोक्त उपायोंसे भिन्न सांख्यशास्त्रमात्रसे होने वाला तत्त्वज्ञान रूप उपाय ही ऐकान्तिक तथा आत्यन्तिक दुःखोच्छेदमें समर्थ होनेसे श्रेयस्कर है, जो व्यक्त ( महदादिकार्य ), अव्यक्त ( प्रकृति ) तथा पुरुष ( आत्मा ) इन तीन प्रकारके पदार्थोंके ज्ञानसे होता है ॥ २ ॥

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥**

**प्रश्न**—सांख्यमें मुख्य कितने पदार्थ हैं ?

**उत्तर**—सांख्यमतमें व्यक्तादि तीन प्रकार के पदार्थोंका ( जिनमें पचीस तत्त्व सांख्य मत के अन्तर्गत हैं ) स्वरूप मुख्यतः चार प्रकारसे विभक्त है—१ केवल प्रकृति रूप, २ प्रकृति-विकृति उभय रूप, ३ केवल विकृति रूप, ४ अनुभय रूप। जिनमेंसे सारे जगत् कार्यको पैदा करनेवाली किसी दूसरे कारणसे न पैदा होनेवाली प्रकृति जिसे 'अव्यक्त' कहते हैं केवल प्रकृति रूप पदार्थ है। दूसरे व्यक्त पदार्थका नौ हिस्सोंमें विभाग किया है—( १ ) जिसमेंसे महत्तत्व अहङ्कार पञ्चतन्मात्रा ये सात प्रकृति-विकृति ( कारण कार्य उभय रूप ) पदार्थ हैं, ( २ ) और एकादश इन्द्रिय तथा पञ्चमहाभूत ऐसे सोलह केवल विकृति ( केवल कार्य रूप ) पदार्थ हैं। चौथा 'ज्ञ' पुरुष अर्थात् आत्मा अनुभय रूप ( न कारण न कार्य ) है, ऐसे तीन पदार्थ या पचीस तत्त्व सांख्यमतमें ४ भागोंमें रक्खे गये हैं ॥ ३ ॥

**दृष्टमनुमानमाप्तवचनं सर्वप्रमाणसिद्धत्वात् ।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥**

**प्रश्न**—विना प्रमाण के उक्त पदार्थ क्यों माने जांय ?

**उत्तर**—परन्तु इन चार प्रकारके प्रमेय ( जानने योग्य ) पदार्थोंकी सिद्धि विना प्रमाणोंके नहीं हो सकती, इसीलिये [1]प्रत्यक्ष [2]अनुमान तथा [3]आप्तवचन ऐसे तीन ही प्रमाण सांख्योंने इसलिये माने हैं कि नैयायिक इत्यादिकोंसे माने हुए उपमानादि रूप बाकी सब प्रमाणोंका इन्हीं तीन प्रमाणोंमें अन्तर्भाव हो जाता है । पूर्वोक्त प्रमेय पदार्थोंकी सिद्धि प्रमाणों ही से होनेके कारण प्रमाणोंका निरूपण करना आवश्यक है ॥ ४ ॥

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

**प्रश्न**—उक्त प्रमाणों का क्या स्वरूप है ?

**उत्तर**—उक्त तीन प्रमाणोंमेंसे विषयोंमें सन्निकृष्ट ( सम्बद्ध ) इन्द्रियोंसे पैदा हुये बुद्धिके व्यापारको प्रत्यक्ष प्रमाण कहते हैं, और इस व्यापारसे चैतन्य शक्तिका बुद्धिमें प्रतिबिम्ब पड़ना ही उसका फल है, जिसे प्रमा या पौरुषेयबोध ऐसा सांख्यमतावलम्बी कहते हैं । अथवा जिससे नियमित विषयका निश्चय होता है ऐसे इन्द्रिय या इन्द्रियसन्निकर्षको ही प्रत्यक्ष प्रमाण कहते हैं । और इसका फल है चेतनमें प्रतिबिम्बित बुद्धिवृत्ति । अनुमान प्रमाण वह है जो हेतु तथा साध्यके व्याप्ति ज्ञान तथा लिङ्गिपदकी आवृत्तिसे हेतुका पक्षमें रहनेका ज्ञान अर्थात् व्याप्ति-विशिष्टपक्षधर्मता-ज्ञानात्मक परामर्श ही को अनुमान कहते हैं, जिससे पर्वतमें वह्निज्ञान रूप अनुमिति फल होता है । इसके १ पूर्ववत् ( कारणसे कार्यका अनुमान ), २ शेषवत् (कार्यसे कारणका अनुमान), ३ सामान्यतो दृष्ट ( कार्य तथा कारणसे भिन्न लिङ्गसे अनुमान ) ऐसे तीन भेद हैं । आप्तवचनरूप शब्द प्रमाणका लक्षण है अर्थात्—यथार्थ वाक्यसे पैदा हुए वाक्यार्थज्ञानको प्रमाणशब्द कहते हैं । इस लक्षणसे वेद तथा तन्मूलकश्रुति–स्मृति–इतिहास-पुराण इत्यादि वाक्यजन्य ज्ञानोंका भी युक्त होनेसे शब्दप्रमाणमें संग्रह हो जाता है, और अयुक्त होनेसे बौद्धादि दर्शनोंके वाक्य-ज्ञानका संग्रह नहीं होता है ॥ ५ ॥

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**

**प्रश्न**—उक्त तीनों प्रमाणोंके प्रमेय कौनसे हैं ?

**उत्तर**—इन्द्रियोंसे ग्रहण करने योग्य सभी पृथिव्यादि पदार्थोंकी सामान्य रूपसे प्रत्यक्ष प्रमाणसे (१) सिद्धि होती है, और अतीन्द्रिय प्रकृत्यादि पदार्थों की सिद्धि सामान्यतो दृष्ट अनुमान प्रमाणसे होती है, और जो याग-अपूर्व-स्वर्ग इत्यादि पदार्थ अनुमानसे भी गृहीत नहीं होते उनकी सिद्धि शब्द प्रमाणसे होती है ॥ ६ ॥

**अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्याद् व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥**

**प्रश्न**—प्रकृत्यादि पदार्थोंका प्रत्यक्ष क्यों नहीं होता ?

**उत्तर**—१ बहुत दूर होनेसे प्रत्यक्ष नहीं होता जैसे आकाशमें बहुत ऊपर गये पक्षीका दूरता दोषसे प्रत्यक्ष नहीं होता । २ बहुत पास होनेसे भी प्रत्यक्ष नहीं होता जैसे अपने ही आंखोंमें लगा हुआ काजल दिखाई नहीं देता । ३ इन्द्रियोंके घात ( नाशसे ) भी प्रत्यक्ष नहीं होता, जैसे अन्धेको रूप नहीं दिखाई देता । ४ मनके एक विषयमें आसक्त होनेसे भी प्रत्यक्ष नहीं होता, जैसे कामी पुरुषको आंखोंके सामने रहनेवाले पदार्थ भी नहीं दिखाई पड़ते । ५ अत्यन्त सूक्ष्म होनेसे वस्तु नहीं दीख पड़ती, जैसे परमाणु पदार्थ पास होने पर भी अतीन्द्रिय होनेसे नहीं दीख पड़ते । ६ व्यवधान ( बीचमें दीवाल इत्यादिकोंका आड़ ) होनेसे भी पदार्थ नहीं दिखाई देते । ७ अभिभव-( तिरस्कार ) से भी पदार्थका प्रत्यक्ष नहीं होता, जैसे दिनमें सूर्यप्रकाशसे तिरस्कृत होनेके कारण चन्द्रमा, नक्षत्र आदि नहीं दीख पड़ते । ८ समानाभिहार ( समान पदार्थमें मिल जाने ) से भी प्रत्यक्ष नहीं होता, जैसे वर्षाका पानी नदीके पानीमें मिल जानेसे अलग नहीं दिखाई देता ॥७॥

**सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥**

**प्रश्न**—इन आठ हेतुओंमेंसे प्रकृत्यादि पदार्थोंके प्रत्यक्ष न होनेमें एक भी न मानकर, उक्त पदार्थोंका अभाव होनेसे ही उनका प्रत्यक्ष नहीं होता ऐसा क्यों न माना जाय ?

**उत्तर**—अत्यन्त सूक्ष्मताके कारण परमाणुओंके समान प्रकृत्यादि पदार्थोंकी

उपलब्धि ( प्रत्यक्ष ) नहीं होती न कि उनका अभाव होनेसे, क्योंकि महतत्त्व अहङ्कारादिकार्योंसे अनुमान द्वारा उनकी सिद्धि होती है। वे महत्तत्त्वादिकार्य जो प्रकृतिके समानधर्म तथा विरुद्धधर्मवाले दो प्रकारके होते हैं, आगे सिद्ध किये जांयगे-क्योंकि साधर्म्य-वैधर्म्य प्रकारक कार्यतत्त्वज्ञान ही मुक्तिमें उपयोगी होता है ॥८॥

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥**

और वह महत्तत्त्वादिकार्य सांख्यमतमें सत् है अर्थात् कारण व्यापारके पहिले भी उसकी अव्यक्त रूपसे सत्ता है, क्योंकि यदि असत् हो तो उसे कोई भी सत् नहीं कर सकता, यदि ऐसा हो तो असत् शशविषाण भी सत् हो जाय। इसी तरह कार्यार्थी समवायि कारणका ग्रहण करता है, जैसे दहीको चाहने वाला दूध का ग्रहण करता है न कि जलका, यदि दधिरूप कार्य असत् हो अर्थात् दूध रूपी समवायि कारणमें न हो तो दही चाहनेवाला जल लेकर भी दहीको बनाले, इसलिये कार्य कारणमें सत् ही है, और यदि कार्य कारणमें असत् हो तो कार्यकी असत्ता सभी कारणोंमें समान होनेसे सभी कारणोंसे सब कार्य पैदा होने लगेंगे, ऐसा नहीं है, क्योंकि संसारमें जो कार्य जिस कारणमें है वह कार्य उसी कारणसे पैदा होता हैं, जैसे मिट्टीसे घटादिकार्य ही होते दिखाई देते हैं न कि पटादि कार्य, इसलिए सर्वसम्भव रूप दोष आनेसे भी कार्य कारणमें सत् है यही सिद्ध होता है।

**प्रश्न**—कारणमें ऐसी एक शक्तिकी विशेषता मानेंगे कि जिससे वह अपने ही कार्यको पैदा करेगीं, इसलिए सर्वसम्भव रूप दोष नहीं आ सकता, तब कार्यको कारणव्यापारके पहिले कारणमें सत् माननेकी क्या आवश्यकता है ?

**उत्तर**—वह कारण शक्तिकी विशेषता अपने शक्य ( अपनेसे होने योग्य ) ही कार्यमें माननी पड़ेगी, यदि सर्वत्र माने तो फिर भी सब कारणोंसे सभी कार्य पैदा होनेका पूर्वोक्त दोष आ जायगा, इसलिये जब अपने २ कार्योंमें कारणोंकी शक्तिका सम्बन्ध मानना आवश्यक है तो बिना कार्यको सत् मानें सम्बन्ध हो नहीं सकता अतः कार्य सत् है। इसी तरह कार्य तथा कारणका अभेद होनेसे अर्थात् कार्यके कारणस्वरूप होनेसे भी कार्यको सत् मानना आवश्यक है क्योंकि जब कारण सत् है तो तद्रूप कार्य असत् कैसे हो सकता है। जैसे पट तन्तुओंका धर्म है उसी तरह संसारके सभी कार्य अपने २ कारणका धर्म होनेसे कार्योंसे

कारण भिन्न नहीं हैं, अर्थात् धर्माधर्मि भावमें भेद नहीं होता, इत्यादि व्यतिरेक अनुमानोंसे भी कार्य तथा कारणका अभेद सिद्ध होता है। यह विषय विस्तारसे तत्त्वकौमुदीमें लिखा है—पाठकोंको वहीं देखना चाहिये ॥ ९ ॥

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

**प्रश्न**—विवेकज्ञानमें उपयोगी व्यक्त ( जगत् कार्य ) तथा अव्यक्त (प्रधान) के समान धर्म तथा विरुद्ध धर्म कौनसे हैं ?

**उत्तर**—व्यक्त महत्तत्त्वादि कार्य हेतुमान् अर्थात् जिसके आविर्भावमें कारण है, ऐसे हैं, और अनित्य अर्थात् कभी २ इनका तिरोभाव भी होता है। इसी तरह अव्यापि याने सबमें नहीं रहते, क्योंकि व्यापक होनेसे क्रिया न होगी। तथा सक्रिय हैं, अर्थात् बुद्ध्यादिक एक-एक शरीरको छोड़कर दूसरे शरीरमें प्रवेश करते हैं। और हर एक आत्माके साथ भिन्न २ बुद्ध्यादि होनेसे बुद्ध्यादिकार्य अपने २ कारणोंमें सृष्टिके भेदसे भिन्न २ होनेसे अनेक हैं। इसी तरह बुद्ध्यादिकार्य अनेक हैं, अथवा आश्रित हैं, जैसे महत्तत्त्व–प्रधानमें, अहङ्कार–बुद्धिमें इत्यादि। इन्हीं कार्योंसे अव्यक्त ( प्रधान ) तथा पुरुषका अनुमान किया जाता है, इसलिए 'लिङ्गयति ज्ञापयति इति लिङ्गम्' इस व्युत्पत्तिसे ये सब कार्य लिङ्ग अर्थात् ज्ञापक हैं। इसी प्रकार इनमें सत्त्व, रज, तथा तमोगुणका मेल होनेसे सब सावयव हैं। तथा बुद्ध्यादिकार्यों का साक्षात् अथवा परम्परासे प्रधानके अधीन ही स्वरूप परिणाम होता है इसलिए ये **परतन्त्र** हैं। ये सब बुद्ध्यादि कार्योंके समान धर्म हैं। इन धर्मोंका वैपरीत्य अव्यक्त प्रकृतिमें होता है, अर्थात् प्रकृति हेतुमान् नहीं है क्योंकि सब कार्यों का मूलकारण है, यदि इसका भी कारण माना जाय तो अनवस्था दोष हो जायगा। और आविर्भावशील न होनेसे सभी कार्योंमें प्रकृतिका सम्बन्ध होनेसे वह व्यापक है, तथा शान्त, घोर, मूढादिक्रिया रहित होनेसे निष्क्रिय है, तथा सजातीय भेद शून्य होनेसे एक है, और कारण रहित होनेसे निराश्रय, तथा पुरुषके अनुमापक होने पर भी अपने कारणका अनुमापक न होनेसे **अलिङ्ग** है। और सत्त्वादि गुणात्मक होनेसे निरवयव है, तथा कार्योत्पत्तिमें स्वयं समर्थ होनेसे **स्वतन्त्र** है ॥ १० ॥

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

**प्रश्न**—इन दोनोंका परस्परमें साधर्म्य तथा पुरुषमें वैधर्म्य क्या है ?

**उत्तर**—महदादि व्यक्त तथा प्रधानरूप अव्यक्त ये दोनों त्रिगुण हैं अर्थात सत्त्व, रज तथा तमोगुण वाले हैं, क्योंकि उक्त तीनों गुणोंकी समान अवस्था हो प्रकृति है और महत्तत्त्वादि प्रकृतिका कार्य होनेसे उनमें भी तीनों गुणोंका सम्बन्ध है। इसी तरह ये दोनों **अविवेकि** हैं, अर्थात् प्रकृतिसे अभिन्न हैं क्योंकि कार्य तथा कारणका अभेद होता है, और प्रकृति स्वयं ही अभिन्न है। तथा **विषय** अर्थात् ज्ञानसे भिन्न बाहर इन दोनोंका ग्रहण होता है, न कि बौद्धमतके समान ये ज्ञानके आकार हैं, ज्ञानाकार माननेसे बुद्ध्यादिक अनेक पुरुषके भोगके योग्य न रहेंगे क्योंकि भिन्न २ विज्ञान तत्तत्पुरुषसे ही जाने जाते हैं इसलिए साधारणता नहीं आ सकेगी। इसीलिए व्यक्त तथा अव्यक्त **सामान्य** हैं, अर्थात् वेश्याके समान सब पुरुषों की भोगयोग्यता इनमें समान है। तथा ये दोनों **अचेतन** अर्थात् अप्रकाशक होनेसे स्वयंप्रकाश चेतनसे भिन्न हैं। तथा **प्रसवधर्मि** अर्थात् समान तथा असमान परिणामको सदा पैदा करनेवाले हैं, क्योंकि प्रधान से बुद्धि तथा बुद्धिसे अहङ्कारादि कार्य सदा पैदा हुआ करते हैं। अब इन दोनोंसे पुरुष ( आत्मा ) के वैधर्म्यको सुनो—व्यक्त तथा अव्यक्त त्रिगुण हैं और पुरुष निर्गुण है, व्यक्ताव्यक्त अविवेकी हैं तो पुरुष विवेकी है, इसी तरह पुरुष अविषय, असाधारण, चेतन तथा अप्रसवधर्मी है क्योंकि पुरुषसे किसीकी उत्पत्ति नहीं होती इत्यादि स्वयं जान लेना चाहिये। यद्यपि **अहेतुमत्त्व,नित्यत्व** इत्यादि व्यक्तका साधर्म्य तथा **अनेकत्वरूप** व्यक्तका साधर्म्य भी पुरुषमें हैं, तथापि त्रिगुणत्वादिरूप व्यक्त तथा अव्यक्तके साधर्म्यका अभाव पुरुषमें होनेसे व्यक्ताव्यक्तका वैधर्म्य पुरुषमें आ ही जाता है ॥ ११ ॥

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥**

**प्रश्न**—त्रिगुणोंका स्वरूप प्रयोजन तथा उनके प्रवृत्तिका प्रकार क्या है ?

**उत्तर**—सत्त्व, रज तथा तम नामके गुण क्रमसे सुख-दुःख तथा मोहात्मक हैं अर्थात् सुख-दुःख तथा मोह ही इनका स्वरूप है। और प्रकाश करना, प्रवृत्ति-करना, तथा नियमन याने रोकना यह क्रमसे इनका कार्य है, अर्थात् सत्त्वगुणसे प्रकाश होता है—( नाना प्रकारके कार्य करनेका ज्ञान होता है ), और रजोगुणसे

नाना कार्य करनेमें प्रवृत्ति होती है, तथा तमोगुणसे कार्य करनेमें प्रवृत्ति रुक जाती है। और इन तीनों गुणोमेंसे एक २ गुण दो दो गुणोंको दबाकर अपनी २। मुख्य शान्तादि वृत्तिको प्राप्त करते हैं इसलिए परस्पर अभिभववृत्तिवाले हैं, और इनमेंसे एक-एक गुण अपने २ कार्यके लिए दूसरें दो गुणोंका सहारा लेकर प्रवृत्त होते हैं इसलिये परस्पराश्रय वृत्ति हैं, और संसारके सभी कार्योंके त्रिगुणात्मक होनेसे परस्पर जनक भी हैं, तथा स्त्री पुरुषके समान आपसमें संयोग-स्वभाव भी हैं, पर विशेषता यह है कि जब इनमेंसे एकगुण अधिक बलवान् होता है तो दो गुण दुर्बल होते हैं ॥ १२ ॥

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

**प्रश्न**—विवेक ज्ञान में उपयोगी उक्त तीनों गुणोंके विशेषधर्म तथा उनके नाम क्या हैं ?

**उत्तर**—इनमेंसे पहिला सत्त्वगुण लघु ( हलका ) है तथा प्रकाश है क्योंकि सत्त्वगुणकी अधिकतामें ही शरीरमें हलकापन पाया जाता है और इन्द्रियोंसे अपने २ विषयका ज्ञान भी शीघ्रतासे होता है, इसीलिए लघुत्व तथा प्रकाशकत्वको सत्त्वगुणका सांख्याचार्योंने लक्षण माना है, जिससे कार्योंका उद्गमन होता है। और दूसरा रजोगुण उपष्टम्भक अर्थात् प्रवर्तक और चल याने सक्रिय है, क्योंकि रजोगुणसे ही कार्य करनेमें प्रवृत्ति होती है और चलन भी उसीसे होता है, इसीलिये प्रवर्तकत्व और सक्रियत्व ये दोनों धर्म रजोगुणके लक्षण हैं। और तीसरा जो तमोगुण है वह गुरु (भारी) तथा वरणक-प्रतिबन्धक होता है, क्योंकि तमोगुणसे ही शरीर तथा इन्द्रियोंमें भारीपन और विषय-ज्ञानकी रुकावट देखनेमें आती है, इसीलिए गुरुत्व तथा प्रतिबन्धकत्व ये दोनों तमोगुणके लक्षण सांख्यशास्त्रमें माने गये हैं। यद्यपि ये तीनों गुण परस्पर विरोधी होनेसे मिलकर किसी एक कार्यमें प्रवृत्त नहीं हो सकते, तो भी जैसे बत्ती, तेल और आग इनके परस्पर विरुद्ध होने पर भी अन्धकार-नाश द्वारा रूप-प्रकाशरूप कार्यके लिये तीनों आपसमें विरोध छोड़कर पदार्थोंको प्रकाशित करते हैं उसी तरह उक्त तीनों गुण आपसमें विरोध छोड़ कर भोगापवर्गरूप पुरुषार्थके लिए आपसमें मिलकर कार्य कर सकेंगे ॥ १३ ॥

अविवेक्यादिः सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥

**प्रश्न**—पूर्वोक्त अविवेकत्वादिधर्म प्रधान तथा महत्तत्वादि व्यक्तोंमें क्यों माने जाते हैं ?

**उत्तर**—त्रिगुणात्मक होनेसे महदादिक भी अविवेकित्वादि धर्मवान् हैं, जैसे-प्रकृति, इस प्रकार अन्वयि अनुमान द्वारा उक्त धर्मोंकी सिद्धिके समान व्यतिरेकी अनुमानसे भी होती है क्योंकि अविवेकित्वादि धर्मोंका जहां विपर्यय-अभाव है वहां त्रैगुण्य भी नहीं है, अर्थात् जहां अविवेकित्वादि धर्मोंका अभाव है वहां त्रैगुण्यका अभाव है जैसे आत्मा, इस प्रकार व्यतिरेकि अनुमानसे भी प्रधान तथा महदादिकोंमें अविवेकित्वादि धर्मोंकी सिद्धि अबाधित है ।

**प्रश्न**—प्रधान सिद्ध हो तो उसमें उक्त धर्म माने जांय तथा अन्वयी अनुमान से उसे दृष्टान्त भी दिया जाय, अभी उसकी सिद्धिमें ही सन्देह है ?

**उत्तर**—यह नहीं हो सकता क्योंकि जैसे व्यावहारिक कार्योंमें यदि काले तन्तु हों तो उनसे काला कपड़ा ही बनता है, यह नियम है, उसी तरह महदादि व्यक्त कार्य भी जब त्रिगुणात्मक अविवेकित्वादि-धर्मवाले उपलब्ध होते हैं तो तद्रूप मूल कारण अव्यक्त भी मानना आवश्यक है ॥ १४ ॥

भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥

**प्रश्न**—अनुमानसे सिद्ध होने पर भी उपलब्धि नहीं होती इसलिये प्रधान कैसे सिद्ध हो सकेगा ?

**उत्तर**—यह भी ठीक नहीं क्योंकि पाषाणमें गन्ध रहने पर भी अनुत्कट होनेसे जैसे उसकी उपलब्धि नहीं होती वैसे सूक्ष्म होनेसे प्रधानकी उपलब्धि नहीं होती, परन्तु महदादि व्यक्त कार्योंसे भिन्न अव्यक्त अग्रिम हेतुओंसे सिद्ध होता है ।

**प्रश्न**—महत्तत्वादिकों को ही सब कार्योंका कारण क्यों न मानें ?

**उत्तर**—ये परिमित—अव्यापि होनेसे घटादिकोंके समान अव्यक्त कारण

वाले हैं, जैसे घट मट्टीरूप अव्यक्त कारण वाला है ऐसा अवश्य मानना पड़ेगा, कार्यकी अव्यक्तावस्था ही कारण होता है, महदादि कार्योंके कारण ही को प्रधान कहते हैं, इसका भी कारण माननेसे अनवस्थादोष आजायगा। इसी प्रकार **समन्वय** रूप हेतुसे भी अव्यक्तकी सिद्धि होती है, भिन्नोंकी समानरूपता को समन्वय कहते हैं, सुख, दुःख तथा मोहसे सम्बद्ध बुद्धयादिक अध्यवसायादि पूर्वोक्त लक्षणवाले प्रतीत होते हैं, जो जिन रूपोंसे सम्बद्ध होते हैं वे उस स्वभाव अव्यक्त कारण वाले होते हैं, जैसे मट्टी, सोना इत्यादि कारणरूपोंसे सम्बद्ध घट-मुकुटादि कार्य मट्टी आदि कारण वाले हैं, उसी तरह सुखदुःखमोहात्मक महदादि कार्योंका भी सुखदुःखमोहात्मक अव्यक्त कारण है; यह सिद्ध होता है। इसी तरह कारणकी शक्तिसे कार्यकी प्रवृत्ति होनेसे भी महदादि कार्योंका कारण मानना आवश्यक है क्योंकि असमर्थ कारणसे कार्यकी उत्पत्ति हो नहीं सकती, और वह कारणमें रहने वाली शक्ति सांख्यमतमें कार्यकी अव्यक्तावस्था ही मानी गई है, यही तो तेलके पैदा करने वाली तिल्लियोंसे बालुओंका भेद है कि तिल्लीमें ही तेल अव्यक्तरूपसे रहता है न कि बालुओंमें, इसलिये महदादि कार्योंकी अव्यक्तावस्था अवश्य माननी चाहिये जिसे प्रधान या अव्यक्त कहते हैं।

इस प्रकार संसारके सभी कारणोंमें विद्यमान ही कार्योंका अपने २ कारणोंसे प्रगट होना तथा अपने २ कारणोंमें लय होना, इस प्रकारके कारण कार्यके विभाग तथा अविभागसे भी यह सिद्ध होता है कि पृथिव्यादि भूतकार्योंका जिस मूल कारणसे आविर्भाव तथा उसमें लय होता है ऐसा मूल कारण ही अव्यक्त या प्रधान कहा जाता है, जिस प्रकार कछुवेके हाथ-पैर इत्यादि शरीरके अवयव उसके शरीर में रहते हुए ही बाहर निकलते तथा भीतर पैठ जाते हैं उसी तरह प्रधानादि कारणोंमें विद्यमान ही महदादि कार्योंकी उत्पत्ति तथा उनमें लय होता है इसलिये अव्यक्तरूप कारण मानना आवश्यक है ?

**प्रश्न**—अव्यक्तकी प्रवृत्तिका प्रकार क्या है ?

**उत्तर**—प्रलयकी अवस्थामें भी सत्त्व, रज तथा तमोगुण समान परिणाम वाले होते हैं अर्थात् अपने-अपने केन्द्रमें एक समान परिणाम होने पर भी परिणाम स्वभाव होनेसे सत्त्वकी सत्त्वरूपसे, रजकी रजोरूपसे तथा तमकी तमोरूपसे प्रलयावस्थामें भी प्रवृत्ति हुआ करती है, और विसदृश परिणाम

होना ही सृष्टि है, परन्तु सृष्टिके समय मिलकर ये तीनों गुण महदादि कार्योंको पैदा करते हैं। जिसमें एक गुणकी प्रधानता तथा बाकी दो गुणोंमें अप्रधानता रहती है जो विना विषम परिणामके नहीं हो सकती! उपमर्द्योपमर्दक भावसे होने वाली इस अनेक प्रकारकी गुणोंकी प्रवृत्तिसे ही सुख-दुःख-मोहादि भेदसे अनेक प्रकारके संसारमें विचित्र कार्य देखने में आते हैं।

**प्रश्न**—इन एक रूप गुणोंकी अनेक प्रकारसे विचित्र प्रवृत्ति क्यों होती है?

**उत्तर**—जैसे एक मधुर रसवाला वर्षा का पानी भिन्न २ देशकी पृथ्वी पर पड़कर वेल, जामुन, नारङ्गी, नीबू इत्यादि फलोंके पेड़ोंकी जड़से जाकर फलोंमें खट्टा, मीठा, कडुवा इत्यादि विचित्र रसोंको पैदा करता है, उसी तरह तीनों गुणों में पूर्वोक्त गुणप्रधान भावके कारण एक २ गुणकी प्रधानतासे सुखादिरूप विचित्र भिन्न २ प्रवृत्ति होती है॥ १५-१६॥

**सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ १७॥**

**प्रश्न**—पुरुष-आत्माकी सिद्धि कैसे होती है?

**उत्तर**—'जो २ सुख-दुःख-मोह रूप होता है वह दूसरेके लिये होता है जैसे शय्या, आसन, स्नान इत्यादि कार्य सुखादि रूप होनेसे दूसरे मनुष्योंके लिए होता है' इस व्यप्तिज्ञान से अनुमान किया जाता है कि सुख-दुःख-मोहात्मक प्रधान महदादि सभी अव्यक्त तथा व्यक्त पर (दूसरे) के लिये हैं, वही पर पुरुष है, अर्थात सुखदुःखादिरूप पदार्थोंका सुखदुःखादिरूप भोग जड़ पदार्थोंको न हो सकनेसे चेतन आत्मा मानना आवश्यक है। पूर्वोक्त त्रिगुणत्व-अविवेकित्वादि धर्मोंका विपर्यास होने से भी असंघात-सुखाद्यनात्मक परपुरुष चेतन सिद्ध होता है, यदि उस पुरुषको भी संघातरूप माना जाय तो वह भी किसी दूसरे सङ्घात पदार्थके लिये होनेसे अनवस्था दोष आ जायगा, व्यवस्था हो सकते अव्यवस्था मानना ठीक नहीं है, इसलिये त्रिगुण तथा उनसे कार्योंके जड़ होनेसे आत्मामें त्रिगुणत्वादि धर्मोंका अभाव होनेके कारण चेतन पुरुषकी सिद्धि होती है। इसी प्रकार जिस तरह रथ विना सारथिकी प्रेरणासे नहीं चल सकता उसी तरह शरीरादि जड़ पदार्थोंमें भी विना चेतनके अधिष्ठानके चलना-फिरना इत्यादि कार्योंमें प्रवृत्ति नहीं हो सकती इसलिये त्रिगुणोंका अधिष्ठाता पुरुष है यह सिद्ध होता है। एवं भोक्तृभावसे भी पुरुषकी

सिद्धि होती है, षड्रसादिकोंके समान जो व्यक्ताव्यक्तरूप व भोग्यपदार्थोंका भोग करता है वह पुरुष आवश्यक है क्योंकि भोक्ताके विना भोग्यपदार्थोंका सुख-दुःखात्मक भोग हो नहीं सकता, अथवा बुद्धयादिक दृश्य पदार्थोंमें द्रष्टाके विना दृश्यता नहीं आसकती इसलिये द्रष्टा आत्मा मानना आवश्यक है। इसी प्रकार शिष्ट पुरुषोंकी मुक्तिके लिये प्रवृत्ति होती है यह देखनेमें आता है, वह मुक्ति त्रिगुण होनेसे सुखदुःखात्मक प्रकृत्यादि पदार्थोंको नहीं हो सकती इसलिये मुमुक्षु जनोंके प्रवृत्तिके उद्देश्य रूप मुक्तिका आधार अत्रिगुण चेतन पुरुष को मानना आवश्यक है ॥ १७ ॥

**जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

**प्रश्न**—आत्मा प्रत्येक शरीरमें भिन्न है या एक ?

**उत्तर**—आत्मा प्रत्येक शरीरोंमें भिन्न है क्योंकि आत्मामें नये २ शरीरके सम्बन्धरूप जन्म तथा उसका त्यागरूप मरण और चक्षु, श्रोत्र आदि कारणोंकी व्यवस्था देखनेमें आती है, यदि सभी शरीरमें आत्मा एक माना जाय तो एकके पैदा होते सब पैदा हों, एकके मरनेसे सब लोग मर जाय तथा एकके अन्धे या बहिरे होते ही सभी लोग अन्धे तथा बहिरे हो जांय, ऐसी अव्यवस्था हो जायगी इसलिये अनेकपुरुष मानना आवश्यक है। और यदि आत्मा सब शरीरमें एकही हो तो एक पुरुषकी धर्ममें प्रवृत्ति होनेसे सारे संसारके मनुष्य एकदम धर्महीमें प्रवृत्त होने लगेंगे, ऐसा नहीं होता, क्योंकि कोई धर्ममें प्रवृत्त है तो कोई अधर्ममें, कोई ज्ञानमें तो कोई अज्ञानमें इस प्रकार संसारके प्राणियों की प्रवृत्ति अलग २ देखनेमें आती हैं। इसी तरह सत्त्व, रज, तम इन तीनों गुणोंके विपर्यय-परिणाम भेदसे भी आत्माकी अनेकता ही सिद्ध होती है क्योंकि कहीं २ केवल सुखही ( जैसे देवताओंमें ), कहीं २ केवल दुःखही ( जैसे मनुष्योंमें ), कहीं २ मोह जैसे नारकीयजीवोंमें पाया जाता है। अथवा त्रिगुण होनेसे आत्माओंका सात्त्विक-राजस तथा तामस भेद होता है इसलिये आत्मा अनेक हैं यह मानना आवश्यक है, यदि एक मानें तो एक पुरुषके सुखी या दुःखी होने पर सभी संसारी जीव सुखी या दुःखी हो जायँगे, और त्रिगुणोंके भेदसे नीच, ऊँच, मध्यम इत्यादि व्यवस्था भी नहीं बनेगी ॥ १८ ॥

